ISSN- 2583-5629

# दीपशिखा

(रामकृष्णमिशन्-विवेकानन्दशैक्षणिकशोधसंस्थानस्य
संस्कृतदर्शनविभागस्य षाण्मासिकी ई-पत्रिका)

पञ्चमः अङ्कः

(४ जुलाई, २०२३)

उपदेष्टा

स्वामी आत्मप्रियानन्दः

मुख्यसम्पादकः

डॉ. राकेशदाशः



संस्कृतदर्शनविभागः
रामकृष्णमिशन्-विवेकानन्दशैक्षणिकशोधसंस्थानम्
बेलुडमठः, हावडा, पश्चिमवङ्गः ७११२०२

# सूची

# सञ्चारिणी दीपशिखा

सञ्चरति दीपशिखा। पञ्चमः अङ्कः पूज्यानां विवेकानन्दस्वामिचरणानां प्रयाणदिने, विश्वविद्यालयस्य च प्रतिष्ठादिने प्राकट्यम् आगतः इति महतः सन्तोषस्य विषयः। अस्मिन् अङ्के अष्टौ लेखाः सन्ति। एतद्विश्वविद्यालयस्य पूर्वच्छात्रः श्रीमान् तथागतमण्डलः (पि.एइच.डि.) मन्थरायाः चरित्रम् आश्रित्य सहृदयहृदयाह्लादिनं प्रबन्धं प्रस्तूय अस्माकं कार्तज्ञ्यभाग् भवति। अस्मिन् एव विश्वविद्यालये गवेषणकर्मणि निरतः श्रीमान् शैवाल आचार्यः महाकवेः भारवेः तत्कृतस्य किरातार्जुनीयमहाकाव्यस्य च सुष्ठु परिचयम् उपस्थाप्य समेषां संस्कृताध्येतृणां महान्तम् उपकारं समपादयद् इति ऊहे। एवम् एव डॉ. सुकान्तमान्नाः नदीसंज्ञाविषये सचित्रं सप्रमाणं लेखं विलिख्य महत् उपाकरोत् व्याकरणजिज्ञासूनाम् इति प्रशस्यः सः। अपरः गवेषकः श्रीमान् राहुलमाइतिः करणसंज्ञासूत्रस्य गभीरं विश्लेषणं कृत्वा वैयाकरणानां जिज्ञासूनां पिपासां निवर्तयति इति श्लाघ्यः सः। राजद्वीपघोषः अस्मद्विश्वविद्यालयस्य समन्वितएम्.ए-कक्षायां पञ्चमवर्षे व्याकरणोपविभागे अधीयानः लघुशब्देन्दुशेखरानुसारं प्रत्याहारसूत्रं सुष्ठु विश्लेष्य स्नेहभाग् भवति अस्माकम्। विश्वविद्यालयस्य शास्त्राध्ययनाध्यापनपरम्परा ऊहितुं शक्नुवन्ति विद्वांसः अस्माद् लेखात्। पूर्ववत्, श्रीरामकृष्णलीलाप्रसङ्गस्य अनुवादाय धन्यतावचनैः भूष्यते शान्तनुनायेकः। अपि च, पूज्यैः गम्भीरानन्दस्वामिभिः विरचितस्य ब्रह्मानन्दस्वामिपादानां जीवनवृत्तस्य तथा च वन्दनीयचरणारविन्दैः ब्रह्मानन्दस्वामिपादैः सङ्कलितानां श्रीश्रीरामकृष्णोपदेशानाम् अनुवादं कृतवद्भ्यां ब्रह्मचारिभ्यां मनोमय-शुभदीपाभ्यां कृतज्ञता व्यज्यते।

प्रसङ्गेऽस्मिन् विश्वविद्यालयस्य प्रतिकुलाधिपतीनां श्रीमताम् आत्मप्रियानन्दस्वामिचरणान्, विभागाध्यक्षान् जपसिद्धानन्दस्वामिपादान् च प्रणमामः। पत्रिकायाः सम्पादने यथायथं साहाय्यम् आचरितवतां समेषां सकार्तज्ञ्यं स्मृत्वा विरमामो विस्तरात्।

मुख्यसम्पादकः

# मन्थरामाधुर्यम्

डॉ. तथागतमण्डलः

प्राचीनकालाद् आरभ्य न केवलम् अस्माकं देशे, विदेशेषु अपि रामायणाख्यस्य आर्षकाव्यस्य विषये महती चर्चा विद्यते।

मा निषाद प्रतिष्ठां त्वमगमः शाश्वतीः समाः।
यत् क्रौञ्चमिथुनादेकमवधीः काममोहितम्॥

[वाल्मीकीयरामायणे बालकाण्डे २.१५]

इत्थम् अकस्मात् मुखनिःसृतेन श्लोकेन चकितः वाल्मीकिः चतुर्मुखस्य ब्रह्मणः निर्देशानुसारं रामजन्मनः प्राग् एव नारदमुखात् रामवृत्तान्तं श्रुत्वा अनुष्टुप्छन्दसा रामायणं व्यरचयत्। एषा तु वाल्मीकिरामायणस्य कथा। वाल्मीकीयरामायणम् अतिरिच्य श्रीरामचन्द्रस्य कथा अग्निपुराणे, अध्यात्मरामायणे च वर्तते। रामायणस्य मुख्यचरित्ररूपेण आदौ सीतारामयोः उल्लेखः भवति। अनन्तरं लक्ष्मणादिभ्रातॄणां, दशरथस्य, कौशल्यादिमहिषीणां विषये चर्चा क्रियते। परन्तु यस्याः चरित्रं विना रामायणं सम्पूर्णं भवितुं नार्हति सा अस्ति मन्थरा। रामजन्मनः मुख्योद्देश्यम् आसीत् रावणवधः। तत्सिद्धये च मन्थरायाः पात्रम् अतीव महत्त्वपूर्णम् अस्ति।

रामरूपप्रज्वलितदीपस्य अधः यत् तमसाच्छन्नं दीपाधानमस्ति अधुना तत्र प्रकाशः उपस्थाप्यते।

**मन्थारायाः देशकालादिवर्णनम्** वाल्मीकिरामायणे अग्निपुराणे अध्यात्मरामायणे च मन्थरायाः देशकालादिविषये किमपि तथ्यं नावाप्यते। अद्भुतरामायणे तु मन्थरायाः प्रसङ्गः एव नास्ति। मन्थराप्रसङ्गः वाल्मीकिरामायणस्य अग्निपुराणस्य अध्यात्मरामायणस्य च अयोध्याकाण्डे प्राप्यते। वाल्मीकिरामायणे मन्थराविषये उच्यते– “ज्ञातिदासी यतो जाता कैकेय्या तु सहोषिता”[वाल्मीकीयरामायणे अयोध्याकाण्डे ७.१]। मन्थरा आसीत् केकयप्रदेशस्य कैकेयीजनकस्य राज्ञः अश्वपतेः दासी। यदा राज्ञा दशरथेन साकं कैकेय्याः परिणयः जातः तदा मन्थरा अपि कैकेय्या साकम् अयोध्याम् आजगाम।

**मन्थरायाः सौन्दर्य्यस्य वर्णनम्** आदिकविः वक्रा, पापदर्शिनी, कुब्जा चेत्यादिरूपेण मन्थरां वर्णयति। परन्तु सा कुब्जा भवतु वक्रा वा, आदिकविः कैकेयीमुखेन मन्थराया यथा रूपकीर्तनं करोति तच्छ्रुत्वा तस्या रूपमाधुर्यविषयेऽपि सम्यग् ज्ञानं भवति।

तत्र वाल्मीकिना रामायणस्य अयोध्याकाण्डे मन्थरायाः रूपकीर्तनम् एभिः श्लोकैः क्रियते-

त्वं पद्मम् इव वातेन सन्नता प्रियदर्शना।
उरस्तेऽभिनिविष्टं वै यावत् स्कन्धात् समुन्नतम्॥
अधस्ताच्चोदरं शान्तं सुनाभम् इव लज्जितम्।
प्रतिपूर्णं च जघनं सुपीनौ च पयोधरौ॥
विमलेन्दुसमं वक्त्रम् अहो राजसि मन्थरे।
जघनं तव निर्मृष्टं रशनादामभूषितम्॥
जङ्घे भृशम् उपन्यस्ते पादौ च व्यायतावुभौ।
त्वम् आयताभ्यां सक्थिभ्यां मन्थरे क्षौमवासिनी॥


*dīpaśikhā*/v5/2023/Dr. Tathagata Mondal/pp. 2-7

अग्रतो मम गच्छन्ती राजसेऽतीव शोभने।

[वाल्मीकीयरामायणे अयोध्याकाण्डे ९.४१-४५]

वायुप्रवाहेन पद्मपुष्पं यथा सन्नतं भवति मन्थरे, त्वमपि तथैव सन्नता सती प्रियदर्शना। तव वक्षस्थलं कुब्जताप्रभावेन व्याप्तम् अस्ति, तस्मात् स्कन्धात् समुन्नतं दृश्यते। वक्षःस्थलस्य अधः यत् सुनाभियुक्तम् उदरम् अस्ति तत् वक्षोजयोः दृष्ट्वा लज्जितं भवति। तस्मात् शान्तः अर्थात् कृशः इति प्रतीयते। तव जघनं विस्तृतम्, अपि च तव पयोधरौ सुपीनौ स्तः। मन्थरे, तव मुखं निर्मलचन्द्रवत् शोभितं भवति। रशनादाम्ना विभूषितं तव जघनं निर्मलम् अस्ति। मन्थरे, तव जङ्घाद्वयं परस्परम् अधिकाधिकतया संलग्नम् अस्ति। तव पादौ अपि बृहदाकारयुक्तौ स्तः। त्वं विशालजङ्घाभ्यां सुशोभिता असि। शोभने, यदा त्वं मम पुरतः क्षौमवस्त्रं धृत्वा गच्छसि तदा अतीव सुन्दरी दृश्यसे।

अध्यात्मरामायणस्य अयोध्याकाण्डे अपि सत्यां वक्रतायां कैकेयी मन्थरां वक्रसुन्दरी इत्युक्त्वा सम्बोधयति “एवं त्वां बुद्धिसम्पन्नां न जाने वक्रसुन्दरि”। [अध्यात्मरामायणे अयोध्याकाण्डे २.७७]

**मन्थरायाः बुद्धेः वर्णनम्** वाल्मीकिरामायणे यथा मन्थरायाः रूपकीर्तनं विधीयते तथैव तस्याः कुविद्याविषये राजनीतिविषये आदिकविः कैकेयीमुखेन प्रशंसनम् अपि करोति।

आसन् याः शम्बरे मायाः सहस्रम् असुराधिपे॥
हृदये ते निविष्टास्ता भूयश्चान्याः सहस्रशः।
तदेव स्थगु यद् दीर्घं रथघोणम् इवायतम्॥
मतयः क्षत्रविद्याश्च मायाश्चात्र वसन्ति ते।

[वाल्मीकीयरामायणे अयोध्याकाण्डे ९.४५-४७]

उभयं रामायणम् अधीत्य इत्येव कल्पयितुं शक्यते यत् मन्थरायां यद्यपि वक्रता आसीत् तथापि सा प्रियदर्शना, क्षत्रविद्यासु पारदर्शिनी चापि आसीत्। रूपे तु तस्याः मालिन्यं नासीत् परन्तु हृदयस्य मालिन्येन तस्याः बाह्यरूपम् अपि मलिनं जातम्।

**वाल्मीकिरामायणे रामस्य वनवासे मन्थरायाः भूमिका** रामायणत्रये एव मन्थरायाः प्रवेशः रामराज्याभिषेकस्य पटभूमिकायाम् एव भवति। वाल्मीकिरामयणे अयोध्याकाण्डस्य सप्तमसर्गाद् आरभ्य नवमसर्गपर्यन्तं मन्थरायाः उल्लेखः प्राप्यते। तदनन्तरं मध्ये कुत्रापि मन्थराचरित्रस्य वर्णनं नास्ति। पुनः अयोध्याकाण्डस्य अष्टसप्ततितमे सर्गे मन्थरायाः उल्लेखं कृत्वा आदिकविः तस्य चरित्रस्य समाप्तिं साधयति। रामस्य राज्याभिषेकार्थम् आयोजनं चलति स्म। तस्मिन् समये रामस्य धात्र्याः सकाशं गत्वा मन्थरा राज्याभिषेकस्य संवादं प्राप्य कैकेयीं सूचयति। सूचनां प्राप्य कैकेयी आह्लादिता सती मन्थरायै हारं दत्तवती।

अतीव सा तु संतुष्टा कैकेयी विस्मयान्विता।
दिव्यम् आभरणं तस्यै कुब्जायै प्रददौ शुभम्॥

[वाल्मीकीयरामायणे अयोध्याकाण्डे ७.३२]

कैकेयी तु रामभरतयोः मध्ये पार्थक्यं न जानाति स्म। यथा भरते तथैव रामे तस्याः प्रीतिरासीत्।

रामे वा भरते वाहं विशेषं नोपलक्षये।
तस्मात् तुष्टास्मि यद् राजा रामं राज्येऽभिषेक्ष्यति॥

[वाल्मीकीयरामायणे अयोध्याकाण्डे ७.३५]

परन्तु मन्थरा तस्याः कुमन्त्रणाबलेन कैकेय्याः मनसि गरलं मिश्रितवती। उक्तञ्च तया, रामः राजा भवति चेत् भरतस्य अनिष्टं निश्चितम्। तस्मात् रामः अवश्यं वनं गच्छेत्।

यदा हि रामः पृथिवीम् अवाप्स्यते

ध्रुवं प्रणष्टो भरतो भविष्यति।
अतो हि सञ्चिन्तय राज्यम् आत्मजे
परस्य चैवास्य विवासकारणम्॥

[वाल्मीकीयरामायणे अयोध्याकाण्डे ८.३९]

मन्थरावाक्येन चोदिता सती कैकेयी अपि भरतस्य भविष्यविषये चिन्ताक्रान्ता सती दशरथस्य सकाशात् रामस्य वनवासम् इष्टवती ।

नव पञ्च च वर्षाणि दण्डकारण्यमाश्रितः॥
चीराजिनधरो धीरो रामो भवतु तापसः।
भरतो भजताम् अद्य यौवराज्यम् अकण्टकम्॥

[वाल्मीकीयरामायणे अयोध्याकाण्डे ११.२६-२७]

वाल्मीकिरामायणं पठित्वा वक्तुं शक्यते यत्, यद्यपि मन्थरा रामस्य विषये कपटप्रबन्धं कृतवती तथापि सामाजिकराजनैतिकदृष्ट्या मन्थरायाः तादृशाचरणे कारणमासीत् कैकेय्याः भरतस्य स्वस्य च भविष्यविषये चिन्तनम्। प्राचीनकाले राज्ञां बह्व्यः भार्याः भवन्ति स्म। तासु यस्याः पुत्रः ज्येष्ठः सर्वतोभावेन श्रेष्ठः च भवति स्म तस्यैव हस्ते समग्रराज्यस्य भारः अर्प्यते स्म। यः राजा भवति स्म तस्य माता भवति राजामाता। तस्मात् यः राजा अभवत् तस्यैव आत्मीया अधिकाधिकतया सम्मानिता भवन्ति स्म। रामः राजा भवति चेत् कौशल्या राजमाता स्यात्। तदा कौशल्यायाः आत्मीयानाम् एव अधिकाधिकतया परिरक्षणं भवेत्। यद्यपि कैकेय्याः वचसा ज्ञायते यत् रामः कौशल्यायाः अपेक्षया कैकेय्याः एव अधिकसेवां करोति स्म– "कौसल्यातोऽतिरिक्तं च मम शुश्रूषते बहु"[वाल्मीकीयरामायणे अयोध्याकाण्डे ८.१८]। यद्यपि रामः कैकेय्याम् आधिक्येन स्निह्यति स्म तथापि रामस्य राज्याभिषेकानन्तरं कौशल्यया कैकेय्या अवमाननं भवितुम् अहर्ति स्म इति धिया मन्थरया रामस्य राज्याभिषेके विघ्नोत्पादः वास्तवदृष्ट्या तु स्वाभाविक एव। यः सर्वभावेन साम्राज्यस्य भारग्रहणे समर्थः भवति तस्यैव राज्यभारग्रहणे योग्यता इति धिया रामः सर्वासु दिक्षु ज्येष्ठः एव आसीद् इति तु कैकेयीवाक्येन एव ज्ञायते–

धर्मज्ञो गुणवान् दान्तः कृतज्ञः सत्यवाञ्छुचिः।
रामो राजसुतो ज्येष्ठो यौवराज्यम् अतोऽर्हति॥

[वाल्मीकीयरामायणे अयोध्याकाण्डे ८.१४]

तस्मात् रामस्यैव राज्याभिषेकः युक्तः। तर्हि मन्थरया रामस्य राज्याभिषेके विघ्नस्य उत्पादनं तु तस्याः कापट्यम् एव द्योतयति। पूर्वस्मिन् काले राज्ञा साकं राजकन्यायाः परिणयानन्तरं राजकन्यया साकं सेविकानां सखीनां वा प्रेषणस्य रीतिरासीत्। राजकन्यया सह याः दास्यः आगच्छन्ति स्म ताः राजकन्यापेक्षया बुद्धिमत्यः भवन्ति स्म। राजकन्यायाः आनुकूल्यचिन्तनम् अनुकूलपरामर्शदानं अपि च प्रतिकूलतायाः निवारणम् एव तासां मुख्यम् उद्देश्यं भवति स्म। मन्थरा आसीत् कैकेय्याः ज्ञातिदासी। तस्मात् तस्याः कैकेयीं प्रति अनुकूलपरामर्शदानं कर्तव्यम् एव आसीत्। भवतु रामः ज्येष्ठः श्रेष्ठश्च। परन्तु कैकेय्याः तथा मन्थरायाः अधिकलाभः भरतस्य राज्यप्राप्तौ सत्याम् एव स्यात् इत्यपि मन्थरावाक्येन स्पष्टरूपेण ज्ञायते–

एवं ते ज्ञातिपक्षस्य श्रेयश्चैव भविष्यति।
यदि चेद् भरतो धर्मात् पित्र्यं राज्यम् अवाप्स्यति॥

[वाल्मीकीयरामायणे अयोध्याकाण्डे ८.३४]

तस्मात् मन्थरादृष्ट्या विचारयामः चेत् सा तस्याः सख्युः न किमपि अनिष्टं साधायति। वाल्मीकिरामायणम् आलोचयामः चेत् सर्वत्र कैकेय्याः भरतस्य च भविष्यविषये एव मन्थरा

चिन्तयति स्म। रामस्य राज्याभिषेकः भविष्यति इति वाक्येन मन्थरा सर्वदा भीता असीत्। भीत्या सा उच्चारयति कैकेयीं प्रति–

ध्रुवं तु भरतं रामः प्राप्य राज्यम् अकण्टकम्।
देशान्तरं नाययिता लोकान्तरम् अथापि वा॥

[वाल्मीकीयरामायणे अयोध्याकाण्डे ८.२७]

अनेन श्लोकेन विचारयितुं शक्यते यत् मन्थरा भरतस्य प्राणविषये अपि चिन्तिता आसीत्। रामः भगवतः विष्णोः अवतारः अस्ति इति तु तया न ज्ञायते। सा तु सामान्यां मनुष्यबुद्धिम् आश्रित्य साधारणमनुष्यत्वेन रामं विचारयति। विचारस्य फलरूपेण सा इदम् एव सिद्धान्तयति यत्, यथा सामान्यलोकसमाजे दृश्यते यत्, राजानः स्वस्य सिंहासनस्य सुरक्षार्थं तेषाम् अपरान् सपत्नान् घ्नन्ति स्म। मन्थरा राजनीतिकुशला आसीत्। तया ज्ञायते राजपदस्य एतादृशः कुप्रभावः विद्यते यत् तस्य प्राप्तये प्राणप्रियः सहोदरः अपि शत्रुः भवति। राजपदस्य प्राप्तये तदा स्वात्मीयाः अपि स्वात्मीयानां रक्तपाताय किञ्चिद् अपि न विचिन्तयन्ति। यद्यपि रामः स्वभ्रातृणां पितृवत् स्नेहेन पालनं करोति। परन्तु अनन्तरं कदाचित् रामः यदि स्वस्य राजपदस्य रक्षार्थं भरतेन भीतः सन् तस्य हननं कुर्यात् तर्हि तस्याः सख्युः पुत्रशोकेन का दशा स्यात्। या मन्थरा तस्याः सख्युः आनुकूल्यसम्पादनाय केकयप्रदेशाद् अयोध्याम् आगता सा कथं कैकेय्याः तस्याः पुत्रस्य वा भविष्यविषये चिन्तनं न कुर्य्यात्। सामाजिकराजनैतिकदृष्ट्या पश्यामः चेत् मन्थरा न दुष्टा, अपि तु तत्कालिकसामाजिकराजनैतिकविषये सुनिपुणज्ञानसम्पन्ना।

**अग्निपुराणे रामस्य वनवासगमने मन्थरायाः भूमिका** अग्निपुराणे अवतारवर्णनाप्रसङ्गे रामायणस्य वर्णनम् अग्निना क्रियते। अग्निपुराणे यत् रामोपाख्यानम् अस्ति तत्र रामस्य राज्याभिषेके विघ्नस्य उत्पादनाय मन्थरायाः भूमिका किञ्चिद् भिन्नतया वर्णिता। अत्र रामं प्रति मन्थरायाः विरागस्य कारणं किञ्चिद् भिन्नम्। अग्निपुराणस्य षष्ठाध्याये उच्यते–

पादौ गृहीत्वा रामेण कर्षिता सापराधतः।
तेन वैरेण सा रामवनवासञ्च कांक्षती॥ [अग्निपुराणे ६.८]

अर्थात् रामः मन्थरायाः पादयोः आकर्षणं कृतवान्। तेन कारणेन मन्थरा रामस्य वनवासम् इच्छति।

अत्र "तेन वैरेण" इत्यनेन पदेन स्पष्टं ज्ञायते यत् रामस्य वनवासे कारणम् अस्ति रामेण मन्थरायाः पादाकर्षणम्। यदि रामेण मन्थरायाः पादाकर्षणं न क्रियेत तर्हि मन्थरा रामस्य विरुद्धं कुमन्त्रणं न कुर्यात्। अत्र मन्थरायाः यादृशचरित्रस्य वर्णनं प्राप्यते तेन ज्ञायते यत् मन्थरायाः मनसि क्षमाभावस्य लेशमात्रम् एव नास्ति। रामेण केवलं मन्थरायाः पादाकर्षणम् एव कृतम्। अन्यत् किमपि प्रहारादिकं तु न कृतम्। केवलं पादाकर्षणस्य प्रतिशोधरूपेण या चतुर्दशवर्षाणि यावत् वनवासं काङ्क्षितुं शक्नोति सा तु प्रतिशोधमनस्कारूपेण एव स्वचरित्रस्य प्रकटनं करोति।

**अध्यात्मरामायणे रामस्य वनवासे मन्थरायाः भूमिका** वाल्मीकिरामायणम् अग्निपुराणं च अधीत्य विचारयितुं शक्यते यत् मन्थरा कुटिलबुद्धिबलेन कैकेयीं रामस्य वनवासाय प्रेरितवती। परन्तु अध्यात्मरामायणे अयं प्रसङ्गः किञ्चिद् भिन्नतया प्रतिपाद्यते। वाल्मीकिरामायणे अग्निपुराणे च अयोध्याकाण्डे मन्थरायाः प्रवेशः यथा रामस्य राज्याभिषेककाले भवति अत्रापि तथैव। परन्तु अत्र रामस्य राज्याभिषेके विघ्नोत्पादनकार्ये देवाः प्रमुखभूमिकां स्वीकृतवन्तः। तेषां कार्यसम्पादनाय ते मन्थरां परोक्षरूपेण नियोजितवन्तः। अन्यत्र रामायणेषु रामस्य राज्याभिषेके विघ्नार्थं मन्थरायाः साक्षात् भूमिका विद्यते। परन्तु अत्र अध्यात्मरामायणे देवानाम् इच्छानुसारं दैववाण्याः प्रभावेन मन्थरा रामस्य


*dīpaśikhā*/v5/2023/Dr. Tathagata Mondal/pp. 2-7

राज्याभिषेके विघ्नं सम्पादयति। अध्यात्मरामायणे उच्यते–

एतस्मिन् अन्तरे देवाः देवीं वाणीम् अचोदयन्।
गच्छ देवि भुवो लोकम् अयोध्यायां प्रयत्नतः॥
रामाभिषेकविघ्नार्थं यतस्व ब्रह्मवाक्यतः।
मन्थरां प्रविशस्वादौ कैकेयीं च ततः परम्॥
ततो विघ्ने समुत्पन्ने पुनरेहि दिवं शुभे।
तथेत्युक्त्वा तथा चक्रे प्रविवेशाथ मन्थराम्॥

[अध्यात्मरामायणे अयोध्याकाण्डे २.४४-४६]

अध्यात्मरामायणं पठित्वा तु पाठकस्य मनसि एतादृशः विचारः उदियाद् यद् मन्थरा तु समीचीना आसीत्। देवैः प्रेरिता सत्येव सा कैकेयीं रामस्य वनवासाय चोदितवती।

एवं वाल्मीकिरामायणम् अग्निपुराणञ्च पठित्वा रामानुरागिणां मन्थराविषये सनिन्ददृष्टिः एव स्वाभाविकी। परन्तु रामायणत्रयम् एव यः पठति स चन्द्रस्य कलङ्कं गृह्णीयाद् उत आलोकरूपशोभां गृह्णीयात् तद्वत् संशयः स्यात्।

मम मतेन तु सत्यपि कलङ्के यस्याधिक्यम् अस्ति तस्यैव ग्रहणं कर्तव्यम्। परन्तु यद्यपि रामायणद्वये मन्थरा परमपापिकारूपेण प्रतिपादिता तथापि तत्रैव तस्याः चरित्रस्य माधुर्य्यं निहितम् अस्ति। कथमिति चेत् वर्ण्यते– विष्णोः द्वारपालौ जयविजयौ सनकादीनाम् ऋषीणां शापेन पृथिव्यां त्रिषु युगेषु विष्णोः शत्रुरूपेण त्रिः जन्म स्वीकृतवन्तौ। विष्णोः हस्तेन मरणं विना तयोः मुक्तिः न स्यात्। तस्मात् त्रेतायां रावणकुम्भकर्णरूपेण तौ रामेण हतौ। यदि रामस्य वनवासकाले सीताहरणं न स्यात् तर्हि सीतायाः उद्धाराय युद्धाभावे तयोः मरणं पुनः मुक्तिः अपि न स्यात्।

रावणेन धर्षिता सती कुशध्वजस्य वाङ्मयी कन्या वेदवती सीतारूपेण जाता।

यस्मात् तु धर्षिता चाहं त्वया पापात्मना वने॥
तस्मात् तव वधार्थं हि समुत्पत्स्ये ह्यहं पुनः।

[वाल्मीकीयरामायणे उत्तरकाण्डे १७.३१-३२]

यदि वनवासकाले सीताहरणं न स्यात् तर्हि रामेण रावणवधः न स्यात्। असति रावणवधे वेदवत्याः शापः व्यर्थः स्यात्। रामस्य वनवासः यदि न स्यात् तर्हि अन्धमुनिना पुत्रवियोगोत्थदुःखेन प्रदत्तः शापः व्यर्थः स्यात्।

इतोऽपि मारीचस्य मुक्तिः, जटायोः मोक्षप्राप्तिः, शवर्याः मुक्तिः, हनुमता साकं रामस्य मेलनं, बालिनो वध इत्यादिकं बहुमाहात्म्यपूर्णं घटनाजातं रामस्य वनवासकाले एव अभवत्।

रामायणे वनवासस्य मुख्यभूमिका विद्यते। रामस्य वनवासाभावे रामायणम् असम्पूर्णमेव स्यात्। रामायणे अयोध्याकाण्डस्य सप्तमसर्गात् वनवासविषये चर्चा प्रारभ्यते अपि च युद्धकाण्डे या कापि घटना विद्यते तासां मूलं वनवास एव अस्ति।

रामस्य वनवासगमने हेतुभूता अस्ति मन्थरा एव। मन्थरायाः कारणेन परोक्षेण प्रत्यक्षेण वा भवतु, रामस्य वनवासः अभवत्। वस्तुतः मन्थरायाः कार्यकलापादिकम् आपाततः पश्यामः चेत् सा दुष्टं कृतवती इत्येव प्रतिभाति। किञ्चित् गूढरूपेण विचारयामः चेत् मन्थरायाः कार्यकलापानां माधुर्यं रामायणस्य मूले एव विद्यते। यद्यपि मन्थरा रामायणे रामस्य प्रतिकूला एव आसीत्। परन्तु ईश्वरस्य प्रतिकूलः कोऽपि भवितुं नार्हति। यः कोऽपि ईश्वरस्य प्रतिकूलः भवति सः प्रतिकूलतया ईश्वरस्य आनुकूल्यम् एव साधयति। तथैव आसीत् मन्थरा। सा ईश्वरेण रामावतारस्य प्रतिकूलतया अनुकूलकार्यम् एव साधयितुं चिता आसीत्।

तस्मात् मम मतेन तु रामेण हतस्य रावणस्य यथा मोक्षः जातः, रामनामकीर्तनेन यथा हनुमान् राममयः जातः, रामस्य प्रसवेन कौशल्या यथा रत्नगर्भा जाता, यथा वा रामस्य भार्यात्वेन सीतायाः पूर्णता जाता तथैव रामविषये कुचिन्तनेनापि मन्थराचरित्रस्य मलनाशेन प्रतिभाति तस्यां माधुर्य्यम्।

अध्यात्मरामायणे इव आनन्दरामयणे अपि मन्थरा रामस्य राज्याभिषेके विघ्नार्थं दैववाण्या चोदिता।

एवं त्रेतायुगे रामं नगर्यां सीतया सुखम्।
क्रीडन्तं नारदोऽर्केब्दे ययावाकाशवर्त्मना॥
अथ रामो मुनिं पूज्य सीतया लक्ष्मणेन च।
शुश्राव वचनं तस्य सुरैर्विज्ञापितं च यत्॥
निहत्य रावणं युद्धे ततो राज्यं कुरुष्व हि।
अङ्गीकृत्य रघुश्रेष्ठस्तं मुनिं च व्यसर्जयत्॥
अथ रामोऽब्रवीत् सीतां मम राज्याभिषेचनम्।
कर्तुकामोऽस्ति तत्राहं विघ्नम् उत्पाद्य दण्डकम्॥
गच्छामि रावणादीनां वधार्थं लक्ष्मणेन च।
अयोध्यायां वसात्र त्वं कौसल्यां पार्थिवं भज॥
तच्छ्रुत्वा कैकयी चापि तस्यै भूषणम् अर्पयत्।
एतस्मिन्नन्तरे वाण्या देववाक्यात् सुमोहिता॥
तुष्टां दृष्ट्वा तु कैकेयीं भर्त्सयन्त्याह तां पुनः।
मूढे कथं त्वं तुष्टाऽसि हतभाग्याऽसि वेद्म्यहम्॥

[आनन्दरामायणे सारकाण्डे ६.१-५, ४१-४२]



[चित्रम् अन्तर्जालात् स्वीकृतम्]

# कविरविभारविकीर्तिः

## शैवाल-आचार्यः

**भूमिका** समग्रसंस्कृतसाहित्यसागरे कविरविर्भारविः किरातार्जुनीयभासा सर्वान् अतिशय्य देदीप्यते इत्यत्र नास्ति विद्वद्विसंवादः। बृहत्त्रय्यां किरातार्जुनीयस्य आदौ एव गणनं तद् दृढं प्रमाणयति। यद्यपि 'अद्यापि तत्तुल्यकवेरभावात् अनामिका सार्थवती बभूव'[1] इति कालिदासस्तुतिः क्रियते, तथापि 'स विजयतां रविकीर्तिः कविताश्रितकालिदासभारविकीर्तिः'[2] इति ऐल्होल्-शिलालेखे महाकव्योः युगपद् उल्लेखात् महाकविर्भारविरपि कालिदासतुल्यः इति साहित्यसम्प्रदायः। न केवलं तत्, अपि तु परमप्रथितेषु पञ्चस्वपि महाकाव्येषु रघुवंशं, कुमारसम्भवं, किरातार्जुनीयं, शिशुपालवधं, नैषधीयचरितम् इत्येतेषु महाकविर्भारविः कालिदासकोटौ परिगणितः। किं बहुना, भारवेः रचना गरिष्ठा, परवर्तिकवीनां पथप्रदर्शिका, मनोहरतमा, गाम्भीर्यपरिपूरिता नारिकेलफलसम्मिता इति संस्तूयते।

**देशकालवंशपरिचयः** महाकविः भारविः यद्यपि विशिष्टया शैल्या महाकाव्यं निर्माय सहृदयानाम् उन्नतविष्टरे अद्यापि विराजते तथापि तत्पूर्ववर्तिनः कविकुलगुरुकालिदासस्य कथनशैल्याः तथ्यप्रकाशशैल्याश्च प्रभावः तत्पद्येषु दृश्यते। एतेन अयं कविः कालिदासपरवर्ती इति निश्चीयते। किञ्च, माघः सर्वथा भारविप्रभावयुक्तः इति शिशुपालवधपठनेन सम्यग् ज्ञायते। एवं सति भारविः कालिदासपरवर्ती माघपूर्ववर्ती च इति निश्चेतुं शक्यते। इतोऽपि बहूनि प्रमाणानि विद्यन्ते भारविकालविषये–

१) जयादित्यः वामनश्च स्वकृतकाशिकायां 'किरातार्जुनीय'महाकाव्यस्य पद्यम् उद्धृतवन्तौ। काशिकायाः रचनाकालः प्रायः षड्शततमेशवीयाब्दः (६००)। अतः किरातार्जुनीयस्य रचना ततः प्राक्। परन्तु पञ्चाशदधिकषड्शततमेशवीयाब्दे (६५०) बाणभट्टः स्वकृतगद्यकाव्ये हर्षचरिते तत्पूर्ववर्तिनां सर्वेषां कवीनाम् उल्लेखं कृतवान्। तत्र भारवेः नामोल्लेखः न दृश्यते। तत्र गवेषकाः एवं चिन्तयन्ति यत् तस्मिन् समये उत्तरभारते भारविः कवित्वेन प्रसिद्धः न स्यात्।

२) भारविकालविषये महत् प्रमाणम् आवहति ऐल्होल्-शिलालेखः। एषः शिलालेखः राज्ञः द्वितीयपुलकेशिनः प्रशस्त्यां चतुस्त्रिंशदधिकषड्शततमेशवीयाब्दे (६३४) उत्कीर्णः। अस्य प्रणेता कविः रविकीर्तिः। शिलालेखस्य अन्तिमे स्वपरिचयं ददद् अयं कविः ज्ञापितवान् यत् स्वकविताभिः सः कालिदासभारविसदृशः प्रख्यातः सञ्जातः– 'स विजयतां रविकीर्तिः कविताश्रितकालिदासभारविकीर्तिः।' इति।

३) पृथ्वीकोङ्गणिनामकस्य दाक्षिणात्यराज्ञः दानपत्रम् अपि भारविकालं किञ्चित् प्रकाशयति। अस्य दानपत्रस्य समयः प्रायः षट्सप्तत्यधिकसप्तशततमेशवीयाब्दः (७७६)। अत्रोल्लिखितं यत् अस्य राज्ञः उपरितनः सप्तमः राजा दुर्विनीतः किरातार्जुनीयमहाकाव्यस्य पञ्चदशसर्गस्य टीकां व्यरचयत्। अस्याधारेण दुर्विनीतस्य समयः प्रायः एकाशीत्यधिकचतुःशततमेशवीयाब्दः (४८१) इति बलदेव-उपाध्यायः। पाश्चात्त्यदार्शनिकस्य कीथ्-महोदयस्य मतानुसारेण अस्य समयः प्रायः पञ्चाशदधिकपञ्चशततमेशवीयाब्दः (५५०) स्यात्।

---

[1] सम्प्रदाये प्रसिद्धः।

[2] रविकीर्तिकृते ऐल्होल्-शिलालेखे ६३४ ईशवीयाब्दे।



*dīpaśikhā*/v5/2023/Saibal Acharya/pp. 8-15

४) दण्डिकृतात् ‘अवन्तीसुन्दरी’गद्यकाव्याद् अपि भारवेः निवासस्थानम्, आश्रयदाता, वंशपरिचयः इत्यादयः ज्ञायन्ते। अवन्तीसुन्दरीकथानुसारेण भारविः दण्डिनः प्रपितामहः आसीत्। अस्य मूलं नाम दामोदरः। चालुक्यवंशीयराज्ञः विष्णुवर्धनस्य सभारत्नश्चासीत्। परन्तु अत्र विद्यते विमतिः। केषाञ्चन नये भारविः दण्डिनः प्रपितामहस्य दामोदरस्य मित्रम् आसीत्। विष्णुवर्धनसभायां भारविसाहाय्येन दामोदरः प्रविष्टवान्। यद्वा भवतु नाम अवन्तीसुन्दरीकथानुसारेण भारवेः सम्बन्धः चालुक्यराज्ञा विष्णुवर्धनेन, पल्लववंशीय-सिंहविष्णुना गङ्गवंशीय-दुर्विनीतेन च सह आसीत्। एतेषां समयकालः पञ्चाशदधिकपञ्चशततमेशवीयाब्दतः (५५०) पञ्चदशाधिकषड्शततमेशवीयाब्दं (६१५) यावत्।

५) अवन्तीसुन्दरीकथां विहाय ‘अवन्तीसुन्दरीकथासारः’ इति एका पाण्डुलिपिः प्राप्यते। तदनुसारेण भारविः अचलपुरनिवासिनः कौशिकगोत्रोत्पन्नस्य नारायणस्वामिनः पुत्रः आसीत्। दामोदरः तस्य द्वितीयं नाम। विष्णुवर्धनस्य सभारत्नम् आसीत् सः।

६) भारविरचनाशैलीं दृष्ट्वापि तस्य समयः अनुमातुं शक्यते। तथाहि, सूर्यास्तवर्णनदर्शनेन अयं कविः आरवसमुद्रपार्श्ववर्ती इति शारदारञ्जनरायः अभिप्रैति। भारविकाव्यानुशीलनेन प्रतीयते यत् गुप्तकालस्य अन्तिमे भागे कविः किरातार्जुनीयं विरचयन् आसीत्। तथाहि, द्रौपदी युधिष्ठिरं कथयति –

गुणानुरक्ताम् अनुरक्तसाधनः कुलाभिमानी कुलजां नराधिपः।
परैस्त्वदन्यः क इवापहारयेत् मनोरमाम् आत्मवधूम् इव श्रियम्॥

[किरातार्जुनीयम् १.३१] इति।

अस्यायम् अर्थः – गुणानुरागिभिः भटैः युक्तः कुलाभिमानी नरपतिः तादृशः कः स्यात् यः गुणानुरक्तां कुलजां मनोरमां पत्नीम् इव राजलक्ष्मीम् अपहारयेत्। एतेन स्पष्टं प्रतीयते यत् स्वपत्नीं ध्रुवस्वामिनीं शकराज्ञः आदेशानुसारेण तस्मै कापुरुषः राजा रामगुप्तः उपहृतवान्– तमेव निन्दन् अयं श्लोकः।

किञ्च, सप्तमे सर्गे–

श्रीमद्भिः सरथगजैः सुराङ्गनानां
गुप्तानाम् अथ सचिवैस्त्रिलोकभर्तुः। [किरातार्जुनीयम् ७.१] इति।

अत्र गुप्तानाम् इति पदेन श्लेषेण गुप्तराजानाम् उल्लेखं कृत्वा गुप्तवंशसूर्यास्तस्य ध्वननं कृतवान् कविः भारविः।

एवं विचार्यमाणे अयं महाकविः दाक्षिणात्यः इति तु निश्चीयते। समयकालः पञ्चाशदधिकपञ्चशततमेशवीयाब्दतः (५५०) – पञ्चदशाधिकषड्शततमेशवीयाब्दः (६१५) इति अनुमातुं शक्यते। वंशविषये अवन्तिसुन्दरीकथासारे यदुक्तं तद् एव प्रमाणम् अन्यप्रमाणाभावात्।

**किरातार्जुनीयमहाकाव्यम्** महाभारतस्य वनपर्वात् प्रसङ्गम् एकम् उपजीव्य अष्टादशसर्गसम्मितं नीति-सुभाषितादिसमलङ्कृतं पूर्वकविभिरक्षुण्णे चित्रकाव्ये चाद्भुतनैपुण्यं समाविश्य भारविर्महाकविः चित्ताकर्षकं किरातार्जुनीयं महाकाव्यं प्रणिनाय। किरातवेषधारिणा शिवेन सह अर्जुनस्य सङ्ग्राम एव अस्य महाकाव्यस्य मूलभूतविषयः। अनेन युद्धेनैव नायकस्य अर्जुनस्य फलप्राप्तिः सिध्यति। तेन अस्य महाकाव्यस्य किरातार्जुनीयम् इति नाम यथार्थम् एव। किरातकाव्यस्य आरम्भः श्रीशब्देन जातः। अपि च, प्रत्येकस्य सर्गस्य अन्तिमश्लोके लक्ष्मीशब्दप्रयोगः दृश्यते। तस्मात् विद्वांसः अस्य महाकाव्यस्य लक्ष्म्यन्तमहाकाव्यम् इति नामकरणं कृतवन्तः।

अस्य काव्यस्य वीरः अङ्गी रसः। किरातवेशेन अर्जुनस्य पराक्रमं परीक्षितुम् आगतेन महादेवेन तथा तद्गणैश्च अर्जुनस्य युद्धात् युद्धवीरतायाः स्पष्टं प्रतिपादनं विद्यते। तेन सह अर्जुनस्य तपोनिष्ठाप्रदर्शनेन धर्मविरताया अपि प्रदर्शनं कृतम्। एतद् अतिरिच्य शृङ्गार-रौद्र-भयानक-शान्तरसाः अङ्गभूताः। उत्साहः स्थायी भावः। रीतिः पाञ्चाली वैदर्भी च। गुणः प्रसादो माधुर्यं च।

## विषयवस्तु

**प्रथमसर्गे** – युधिष्ठिरसमीपे द्वैतवने वर्णिवेषधारिणो वनेचरस्य मुखात् दुर्योधनस्य शासनकौशलं श्रुत्वा युधिष्ठिरं युद्धार्थम् उत्तेजयितुं द्रौपद्या ओजोगुणपूर्णम् उपालम्भनम्।

**द्वितीयसर्गे** – भीमसेनस्य प्रशंसापूर्वकं द्रौपदीवचसः समर्थनम्। युधिष्ठिरस्य सान्त्वनापूर्वकं तयोः प्रबोधनम्। महामुनेर्व्यासस्य आगमनञ्च।

**तृतीयसर्गे** – युद्धे जयलाभाय इन्द्रकीलशैले अर्जुनस्य तपश्चरणार्थं व्यासस्य उपदेशः, शिवाराधनार्थं च विद्योपदेशः, मार्गदर्शनार्थम् एकस्य गुह्यकस्योपस्थापनं च। गमनकाले द्रौपद्या अर्जुनं प्रत्युपदेशवाक्यानि। यक्षेण सह अर्जुनस्य इन्द्रकीलम् अचलं प्रति प्रस्थानं च।

**चतुर्थसर्गे** – शरदागमेन क्षेत्रादीनां शोभावर्णनम्। अर्जुनस्य हिमालयदर्शनम्।

**पञ्चमसर्गे** – हिमालयस्य रुचिरशोभावर्णनम्।

**षष्ठसर्गे** – अर्जुनस्य इन्द्रकीलशैले आरोहणवर्णनं तपश्चरणं च। तत्तपोभङ्गाय इन्द्रस्य गन्धर्वाणां साचिव्ये अप्सरसां प्रेषणम्।

**सप्तमसर्गे** – गन्धर्वैः सह अप्सरसाम् इन्द्रकीलपर्वते विलासपूर्वकं गमनम्।

**अष्टमसर्गे** – गन्धर्वाणाम् अप्सरसां च कुसुमावचायादिललितकेलिवर्णनम्।

**नवमसर्गे** – सन्ध्या-चन्द्रोदय-सुरतक्रीडा-प्रभातवर्णनम्।

**दशमसर्गे** – अर्जुनस्य प्रलोभनाय अप्सरसां विलासप्रदर्शनम्, तस्य नैष्फल्यं च।

**एकादशसर्गे** – वृद्धविप्रवेषिणा इन्द्रेण सह अर्जुनस्य संवादः। परीक्षानन्तरम् अर्जुनस्य तपसि दृढनिष्ठादर्शनेन प्रसन्नस्य इन्द्रस्य स्वरूपदर्शनानन्तरं शिवाराधनाय अर्जुनं प्रत्युपदेशः।

**द्वादशसर्गे** – अर्जुनस्य कठोरतपसा शिवाराधनम्। तापसैः शिवं प्रति तद्वर्णनम्। किरातवेषिणः शिवस्य धृतशूकररूपस्य मूकदानवस्य चार्जुनसमीपे प्रयाणम्।

**त्रयोदशसर्गे** – शिवस्य अर्जुनस्य च युगपच्छरप्रक्षेपेण अर्जुनहननार्थम् आगतस्य मूकदानवस्य वधः। तच्छरीरात् शरग्रहणार्थम् उद्यतम् अर्जुनं प्रति शिवदूतकिरातस्य अधिक्षेपवचः।

**चतुर्दशसर्गे** - अर्जुनस्य च तत्प्रत्युत्तरप्रदानम्। ततः कार्त्तिकेयाधिष्ठितया किरातसेनया अन्ततः किरातपतिना शिवेन च समम् अर्जुनस्य भीषणयुद्धवर्णनम्।

**पञ्चदशसर्गे** – किरातार्जुनयोश्चित्रयुद्धवर्णनम्।

**षोडशसर्गे** – किरातपतेः समरकौशलदर्शनेन अर्जुनस्य चेतसि नानाविधा वितर्काः। द्वयोः असाधारणभीषणयुद्धवर्णनम्।

**सप्तदशसर्गे** – किरातसेनया समम् अर्जुनस्य युद्धवर्णनम्। शङ्कराऽर्जुनयोस्तुमुलसङ्ग्रामवर्णनम्।

**अष्टादशसर्गे**– पराजितस्य अर्जुनस्य दृढनिष्ठादर्शनेन प्रीतस्य शिवस्य तं प्रति स्वस्वरूपदर्शनदानम्। एवं च तस्य अर्जुनाय पाशुपतास्त्रप्रदानं धनुर्वेदाध्यापनं च। तस्मै इन्द्रादिदेवानाञ्च स्वस्वास्त्रप्रदानम्। अन्ततः सफलमनोरथस्य अर्जुनस्य युधिष्ठिरसमीपे गमनञ्च।

**चरित्रचित्रणम्** भारविः स्वकाव्ये चरित्राणाम् औदात्यं गुणप्रकर्षञ्च विशेषरूपेण प्रदर्शितवान्। युधिष्ठिरः विवेकी कुशलराजनीतिज्ञः धैर्यशीलश्च। भीमसेनः नीतिज्ञाने बलप्रदर्शने च अद्वितीयः। द्रौपदी स्वाभिमानिनी आहतसिंही इव चित्रिता। व्यासः अत्यल्पसमयेऽपि आर्षवाणीभिः गम्भीरप्रभावं विस्तारितवान्। सम्पूर्णस्य महाकाव्यस्य नायकः अर्जुनः संयम-धैर्य-तितिक्षा-साहसप्रभृतिगुणगणैः मण्डितः सन् धीरोदात्तश्रेण्याम् अन्तर्गतः जातः।

**वर्णनकला भाषाशैली च** भारवेः भाषाशैल्याः विशेषता अर्थगौरवम् इति स्वीक्रियते। उच्यते– 'भारवेरर्थगौरवम्' इति। अर्थात्, स्वल्पैः शब्दैः अधिकाधिकार्थानां व्यक्तीकरणम्। भारविः स्वयम् अर्थगौरवम् एव वाचिकाभिव्यक्तेः मानदण्डत्वेन अङ्गयकरोत्। किरातार्जुनीये स्थाने स्थाने अभिव्यक्तेः अपेक्षितगुणानां विषये स्वाभिमतं प्रकटितवान्। भीमवचनं प्रशंसन् युधिष्ठिरः आह–

स्फुटता न पदैरपाकृता न च न स्वीकृतम् अर्थगौरवम्।
रचिता पृथगर्थता गिरां न च सामर्थ्यम् अपोहितं क्वचित्॥

[किरातार्जुनीयम् २.२७] इति।

अस्यायम् आशयः पदेषु स्फुटता नाम स्पष्टता निरन्तरतया प्रवाहिता, अर्थगौरवेण पूरिता। प्रत्येकं वाक्यानां भिन्नो भिन्नः अर्थः परिस्फुटितः। किञ्च, शब्दाः स्वार्थप्रकटने समर्थाः एव आसन्। एतेन स्ववाग्वैचित्र्यस्य अर्थगौरवस्य च ध्वननम् अत्र कृतम् इति परिस्फुटितं भवति। न केवलं तद् अपि तु स्वकाव्ये तस्य पूर्णतया पालनम् अपि कृतम् इति दृश्यते। 'स सौष्ठवौदार्यविशेषशालिनीं विनिश्चितार्थाम् इति वाचम् आददे' [किरातार्जुनीयम् १.३] इत्युक्त्या काव्यविषये स्वमनोभावम् एव परिस्फुटितवान्। सौन्दर्यापेक्षया शिवं तथा आस्वादनापेक्षया प्रयोजनम् अधिकं महत्त्वम् अधिकरोति तत्कृते महाकाव्ये। श्रेयः सत्यश्च तस्य साध्यं, सौन्दर्यमुपकरणमात्रम्। काव्ये सौष्ठवस्य औदार्यस्य च विशेषता भवेत्। सौष्ठवादिगुणाः न भवन्ति चेद् अपि अर्थगौरवपुष्टा वाणी वरेण्या। तस्य भाषा प्रौढा परिमार्जिता च, विविक्तवर्णाभरणा, सुखश्रुतिः च, क्वचिच्च प्रसन्नगम्भीरतापि दृश्यते। यथा–

सहसा विदधीत न क्रियाम् अविवेकः परमापदां पदम्।
वृणुते हि विमृश्यकारिणं गुणलुब्धाः स्वयम् एव सम्पदः॥

[किरातार्जुनीयम् २.३०] इति।

अविचिन्त्य किमपि न कार्यम्। यतो हि अविवेकः परमविपदः स्थानं भवति। यः विवेकी विचिन्त्य कार्यं सम्पादयति, तस्य गुणैः आकर्षिताः सम्पदः स्वयम् एव तत्पदे आगच्छन्ति। एवं बहुविधानि उदाहरणानि द्रष्टुं शक्यन्ते।

एवं दर्शं दर्शं किरातार्जुनीयस्य टीकाकारः मल्लिनाथः 'नारिकेलफलसम्मितं वचो भारवेः' इति उक्तवान्। अर्थात् भारविवचनं नारिकेलफलतुल्यं गूढम्। आपाततः बहिष्ठात् काठिन्यम् अनुभूयते परन्तु विभाजिते सति रसम् आस्वादयितुं शक्ताः सरसिकाः। वस्तुतः दीपकः यथा पुरस्तात् स्थापितं वस्तु परिस्फुटयति तथैव अर्थदृष्ट्या भारविः शब्दानाम् अन्तरात्मानम् उन्मीलयति। यथा वा स्वच्छदर्पणे पुरः स्थितं वस्तु प्रतिबिम्बितं भवति – 'विमला तव विस्तरे गिरां मतिरादर्श इवाभिलक्ष्यते।' [किरातार्जुनीयम् २.२६]

**छन्दोयोजना** विविधछन्दःप्रयोगेऽपि भारवेः नैपुण्यं दरीदृश्यते। तेन यथा इन्द्रवज्रा, उपेन्द्रवज्रा, वैतालीयः, द्रुतविलम्बितं, प्रमिताक्षरा, प्रहर्षिणी, स्वागता, उद्गता, पुष्पिताग्रा इत्यादीनां प्रसिद्धच्छन्दसां प्रयोगः कृतः। तथैव औपच्छन्दसिकः, अपरवक्त्रः, जलोद्धतगतिः, चन्द्रिका, मत्तमयूरः इत्यादीनां दुर्लभच्छन्दसाम् अपि प्रयोगसामर्थ्यं तस्मिन् दृष्टम्। भारवेः वंशस्थविल-च्छन्दसः प्रयोगः अत्यन्तः प्रशंसनीयः विद्वद्विभागे। किरातार्जुनीये त्रिंशदधिकैकसहस्रपद्येषु (१०३०) अष्टपञ्चाशदधिकैकशतपद्ये (१५८) वंशस्थच्छन्दसः प्रयोगः कृतः। क्षेमेन्द्रेण वंशस्थप्रयोगप्रशंसायाम् उक्तम्–

वृत्तच्छत्रस्य सा कापि वंशस्थस्य विशेषता।
प्रतिभा भारवेर्येन सच्छायेनाधिकीकृता॥ [सुवृत्ततिलकम् ३.३१] इति।

महाकाव्ये एकस्मिन्नेव सर्गे विविधच्छन्दसां प्रयोगः भवितुम् अर्हति इति आचार्यविश्वनाथकविराजनिर्देशानुसारं पञ्चमसर्गे हिमालयस्य नैसर्गिकदृश्यवर्णनप्रसङ्गे भारविः औपच्छन्दसिकः, क्षमा, प्रमिताक्षरा, प्रभा, रथोद्धता, जलधरमाला, प्रहर्षिणी, जलोद्धतगतिः, वसन्ततिलका, पुष्पिताग्रा, शालिनी, मालिनी इत्यादीनां बहूनां छन्दसां प्रयोगं कृत्वा छन्दःशास्त्रविषये स्वज्ञाननैपुण्यं विद्वत्समाजे दृढं प्रतिष्ठापितवान्।

**अलङ्कारप्रयोगः** अलङ्कारप्रयोगे भारविः अप्रतिमः। अर्थालङ्कारप्रयोगेन सह शब्दालङ्कारप्रयोगेऽपि सहृदयानां हृदयम् आह्लादयति। मार्गे स्थलकमलिनीपुष्पस्य परागाः पवनेन उच्छुरिताः। परागपुञ्जः चक्रवातप्रवाहेण छत्रम् इव आकारं स्वीकृत्य रमते। तद्दृश्यं निदर्शनालङ्कारेण कनकमयातपत्ररूपेण उपमयति –

उत्फुल्लस्थलनलिनीवनाद् अमुष्माद् उद्धूतः सरसिजसम्भवः परागः।
वात्याभिर्वियति विवर्तितः समन्ताद् आधत्ते कनकमयातपत्रलक्ष्मीम्॥'

[किरातार्जुनीयम् ५.३९] इति।

एवं रमणीयवर्णनसामर्थ्यात् सहृदयेषु भारविर्महाकविः 'आतपत्रभारविः' 'छत्रभारविः' वेति नाम्ना प्रसिद्धः सञ्जातः। एतद् अतिरिच्यापि हिमालयवर्णने, नैसर्गिकदृश्यवर्णने, ग्राम्यसारल्यवर्णने च अर्थालङ्काराणां प्रयोगः दरीदृश्यते। उपमा, उत्प्रेक्षा, निदर्शना, अर्थान्तरन्यासः, समासोक्तिः, काव्यलिङ्गं, व्यतिरेकः, अतिशयोक्तिः इत्यादीनाम् अलङ्काराणां प्रयोगः स्थाने स्थाने भूरिशः कृतः। कालिदासस्य इव भारवेरपि 'अर्थान्तरन्यासालङ्कारः' प्रियः आसीत्। तस्य प्रियभूताः राजनीतिक-व्यावहारिकसूक्तयः अनेनैवालङ्कारेण विरचिताः।

चित्रकाव्यस्य ऐन्द्रजालिकः भारविः इति सर्वेषां सम्मतिः। कूटकवितायां न केवलं दक्षः अपि तु प्रयोगे पक्षपाती अपि। पादान्तादियमकम्, पादादियमकम्, एकाक्षरपदम्, एकाक्षरं, समुद्गकं, प्रतिलोमानुलोमपादः, सर्वतोभद्रः, गोमूत्रिकाबन्धः इत्यादीनां बहूनि उदाहरणानि प्राप्यन्ते। प्राधान्येन १५तमे सर्गे किरातार्जुनयुद्धस्य भीषणत्वं प्रकटयितुम् एव अनेन चित्रकाव्यस्य बन्धनं कृतम्।

**एकाक्षरपदः**

स सासिः सासुसूः सासो येयायेयाययाययः।
ललौ लीलां ललोऽललः शशीशशिशुशीः शशन्॥ [किरातार्जुनीयम् १५.५]

अस्यार्थः– हस्ते असिं, बाणं धनुः च स्वीकृत्य अर्जुनः शोभते। अयम् अर्जुनः गज-सुवर्णादेः विविधसम्पदः प्रदायकं भाग्यम् अधिगतः अस्ति। सः अलोलः अचञ्चलः सन् शशीशस्य शिशोः स्कन्दस्य ईर्ष्याप्रदं प्लुतगतिं कृतवान्।

**गोमूत्रिकाबन्धः**

नासुरोऽयं न वा नागो धरसंस्थो न राक्षसः।
ना सुखोऽयं नवाभोगो धरणिस्थो हि राजसः॥ [किरातार्जुनीयम् १५.१२]

अस्यार्थः, हे प्रमथ, अयं तपस्वी दैत्यः न, न वा नागः न पर्वताकारः राक्षसः, परन्तु अयं पुरुषः भूतलवास्तव्यः रजोगुणी सुखसाध्यः उत्साहयुक्तः। अत्र श्लोके गोमूत्रिकाबन्धः प्रयुक्तः। गोः मूत्रं यथा वक्राकारेण पतति अत्रापि तथैव श्लोकबन्धः।

**एकाक्षरः**

न नोननुन्नो नुन्नोनो नाना नानानना ननु।
नुन्नोऽनुन्नो ननुन्नेनो नानेना नुन्ननुन्ननुत्॥ [किरातार्जुनीयम् १५.२४]

अस्यार्थः, विविधमुखविशिष्टाः हे मनुष्याः, यः निकृष्टेन पराजितः सः पुरुषः न भवति। यः च स्वस्मात् निकृष्टस्य पीडाकरः सः अपि पुरुषः न। यस्य प्रभुः न पीडितः स स्वयं पीडितः अपि अपीडितः इव भवति। यः अतिशयेन पीडितं पुनः पीडयति सः पुरुषः निश्चयेन पापकारी भवति। तस्मात् हे प्रमथाः, युष्माभिः न पलायितव्यम्। यदा अर्जुनेन शिवस्य अनुचराः प्रमथाः ताडिताः भवन्ति तदा तान् उद्दिश्य इदं वाक्यम्।

**प्रतिलोमानुलोमपादः**

वेत्रशाककुजे शैलेऽलेशैजेऽकुकशात्रवे।
यात किं विदिशो जेतुं तुंजेशो दिवि किंतया॥ [किरातार्जुनीयम् १५.१८]

अस्यार्थः, भवन्तः वंशबर्बरवृक्षैः संयुक्ताः, शत्रुभिः दुर्वेध्याः। स्वर्गेऽपि हिंसाजनने समर्थाः। स्वर्गेऽपि दैत्यनिषूदने अर्हाः। अस्मिन् क्षुद्रस्थाने क्षुद्रशत्रोः भीत्या पलायनं भवत्सु न युज्यते। अत्र प्रतिलोमानुलोमपादः प्रयुक्तः। आदितः अन्ततो वा समानः अर्थः प्रतिभाति।

**सर्वतोभद्रः**

देवाकानिनिकावादे वाहिकास्वस्वकाहिवा।
काकारेभभरेकाका निस्वभव्यव्यभस्वनि॥ [किरातार्जुनीयम् १५.२५]

अस्यार्थः, देवतानाम् उत्साहप्रदातारः, युद्धे अश्वाः इव स्वयं कलहे निमग्नाः, मदस्राविगजघटयुक्ताः हे काकवत् निन्दिताः पुरुषाः, सोत्साह-निरुत्साहजनैः शोभमानाः हे सैनिकाः, यूयं युद्धं कुरुत इत्येवम् अर्थः। अयं श्लोकः कुल्लकस्य अंशः। अतः सम्पूर्णः वाक्यार्थः कुल्लकात् ज्ञेयः। अत्र सर्वतोभद्रः चित्रबन्धः प्रयुक्तः। अत्र पद्ये दक्षिणतः वामतः च समानानि अक्षराणि प्रयुक्तानि। अतः सर्वतोभद्रः।

**द्व्यक्षरः**

चारचुञ्चुश्चिरारेची चञ्चच्चीररुचा रुचः।
चचार रुचिरश्चारु चारैराचारचञ्चुरः॥ [किरातार्जुनीयम् १५.३८]

विशेषगतिना विख्यातः, चिराय शत्रुनाशकारी, चञ्चलवल्कलकान्त्या दीप्तिमान्, सदाचारप्रभृतिगुणैः सञ्चरन् मुनिः सुन्दरगत्या चलति इति सामान्यार्थः श्लोकस्य। अत्र केवलं चकाररेफयोः अनुप्रासः दृष्टः।

**महायमकम्**

विकाशमीयुर्जगतीशमार्गणा विकाशमीयुर्जगतीशमार्गणाः।
विकाशमीयुर्जगतीशमार्गणा विकाशमीयुर्जगतीशमार्गणा॥
[किरातार्जुनीयम् १५.५२]

प्रथमपादस्य अर्थः जगतीशस्य अर्जुनस्य मार्गणाः बाणाः विततः। द्वितीयपादस्य अर्थः जगति ईशमार्गणाः शिवस्य बाणाः विषमगतिं प्राप्नुवन्। तृतीयपादस्य अर्थः जगतीशाः दानवाः, तान् मारयन्ति जगतीशमारः, दानवहन्तारः, तेषां गणाः जगतीशमार्गणाः। ते हर्षं प्राप्नुवन्। चतुर्थपादस्य अर्थः जगतीशं दिदृक्षवः देवादयः वीनां पक्षिणां गतिम् आकाशम् आगताः। अत्र पूर्वार्धोत्तरार्धयोः वर्णाः तुल्यरूपाः। अतः महायमकम्।

एवं नैकानि उदाहरणानि विद्यन्ते। दिङ्मात्रमत्रोदाहृतम्।

**सूक्तयः** भारविकृतसूक्तिष्वपि तस्य भाषाशैल्याः तथा अभिव्यक्तेः विशेषता उल्लेखनीया एव। विचारप्राधान्यता तथा चिन्तनगाम्भीर्यता एतासु सूक्तिषु स्मरणीया एव। यथा– 'हितं मनोहारि च दुर्लभं वचः'[३] 'वरं विरोधोऽपि समं महात्मभिः'[४] 'अमर्षशून्येन जनस्य जन्तुना न जातहार्देन न विद्विषादरः'[५] 'व्रजन्ति शत्रून् अवधूय निःस्पृहाः शमेन सिद्धिं मुनयो न भूभृतः'[६] 'रम्याणां विकृतिरपि श्रियं तनोति'[७] 'सा लक्ष्मीरुपकुरुते यया परेषाम्'[८] 'व्रजन्ति ते मूढधियः पराभवं भवन्ति मायाविषु ये न मायिनः।'[९] एवं बहूनि यानि प्रयोजनानि प्रात्याहिकजीवने सर्वेषामुपकाराय प्रोत्साहाय चैव।

**टीकाः** कस्यापि ग्रन्थस्य टीकाग्रन्थान् उपलभ्य अनुमातुं शक्यते यत् तस्य काव्यस्य प्रसिद्धिः कियती। किरातार्जुनीयमहाकाव्यस्य नैके टीकाग्रन्थाः सन्ति। अत्यन्तप्राचीनकाले राजा दुर्विनीतः टीकां व्यरचयत् इति पूर्वमेव उक्तम्। एतदतिरिच्य प्रसिद्धा टीका मल्लिनाथकृतघण्टापथः। 'नारिकेलफलसम्मितं वचो भारवेः'[१०] इति अनेनैव टीकाकारेण किमर्थम् उक्तम् इत्येतस्य टीकाग्रन्थस्य अध्ययनेन सम्यक् अवबुध्यते। एतदतिरिच्यापि त्रयस्त्रिंशत्प्राचीनटीकानां (३३) सन्धानं प्राप्यते। एतासु वल्लभदेव-विद्यामाधव-देवराजभट्ट-क्षितिपालमल्ल-प्रकाशवर्ष-कृष्णकवि-रविकीर्ति-चित्रभानु-एकनाथप्रभृतीनां टीकाः प्राचीनाः। शब्दार्थदीपिका प्रसन्नसाहित्यचन्द्रिका एते टीके अपि उल्लेख्ये। एतयोः कर्तुः उल्लेखो न दृश्यते। वर्तमाने नूतनतया नृसिंह-प्रकाशवर्ष-जोनराज-प्रभृतीनां टीकाः प्रकाशिताः जाताः।

**उपसंहारः** 'एकश्चन्द्रस्तमो हन्ति, न च ताराशतैरपि' इति सुभाषितवचनाद् एकमेव 'किरातार्जुनीयम्' महाकाव्यं महाकवेर्भारवेः यशः शातयितुम् अलम्। किरातार्जुनीयमहाकाव्ये भारवेः बहुमुखीपाण्डित्यस्य निदर्शनं प्राप्यते। विविधशास्त्रेषु अबाधिता गतिरासीत् तस्य इति काव्यपठनेन सम्यक् ज्ञायते। विशेषतया राजनीतौ अर्थशास्त्रे तस्य ज्ञानं प्रामाणिकम् आसीत्। व्याकरणे, आयुर्वेदे, धनुर्वेदे, नीतिशास्त्रे, कामशास्त्रे अपि स्वपाण्डित्यस्य परिचयं प्रादात्। महाकविरूपेण दुर्लभवैशिष्ट्यम् इदम् अस्ति यत् बौद्धिकतायाः गाम्भीर्यस्य प्रतिष्ठा अनन्यरूपेण महाकाव्ये प्रतिष्ठाप्य स्वचिन्तनस्य जीवनमर्मणः च अभिव्यक्तिसाधनम्।

भारविमहाकाव्यस्य मुख्यः ध्येयः देशस्य वीर्यहीनस्य सुप्तस्य क्षत्रियसमाजस्य जागरुकता। भारविः यस्मिन् काले महाकाव्यमिदं रचयन् आसीत् तदा शक-हुणप्रभृतिबहिर्देशशक्तिभिः अस्माकं मातृभूमिः आक्रान्ता आसीत्। सामन्तीयराजानः व्यसने निमग्नाः आसन्। केवलं यशोवर्मणः पराक्रमेण हूणराजा

३ किरातार्जुनीयम् १.४
४ किरातार्जुनीयम् १.८
५ किरातार्जुनीयम् १.३३
६ किरातार्जुनीयम् १.४२
७ किरातार्जुनीयम् ७.५
८ किरातार्जुनीयम् ७.२८
९ किरातार्जुनीयम् १.३०
१० मल्लिनाथकृतायां घण्टापथव्याख्यायां भूमिकाश्लोकः।

मिहिरकुलः पराजितः जातः। एवं प्रतीयते यत् यशोवर्मणः पराक्रमं द्योतयितुम् एव अर्जुनस्य एवं चरित्रचित्रणं कृतम्। तथा महर्षिव्यासस्य अमोघवाण्या एषः सन्देशः समाजाय प्रदत्तः – 'अतः प्रकर्षाय विधिर्विधेयः प्रकर्षतन्त्रा हि रणे जयश्रीः॥'[११] इति शम्।


[क्वचित् मन्दिरगात्रे उत्कीर्णं चित्रम् इदं किरातवेशधरशिवेन अर्जुनस्य युद्धस्य कथां व्यक्तीकरोति]

[११] किरातार्जुनीयम् ३.१७

# निमेषेण नद्याः अतिक्रमणम्

डॉ. सुकान्त मान्ना

पाणिनीयव्याकरणे नदी इति एकः पारिभाषिकः शब्दः अथवा संज्ञा। नदी संज्ञा कदा कस्य कथं भवति इति विषयः अत्र सरलतया उपस्थापितः। नदीसंज्ञाम् अत्र अधस्तनचित्राद् अवगच्छन्तु।




**चित्रसारः**

**नदीसंज्ञा** नदी इति संज्ञा कस्य भवति? –शब्दस्य भवति। कीदृशस्य शब्दस्य नदी इति संज्ञा भवति? –यः शब्दः सर्वदा स्त्रीलिङ्गे विद्यते तस्य। पुनः कीदृशस्य? –इकारान्तस्य उकारान्तस्य च शब्दस्य। तत्रापि सामान्यतया यः (दीर्घ)ईकारान्तः/(दीर्घ)ऊकारान्तः तस्य एव नदी इति संज्ञा भवति। तत्र पाणिनीयसूत्रं तावत्– 'यूस्त्र्याख्यौ नदी' [अष्टाध्यायी १.४.३] इति। तत्र सर्वदा स्त्रियां विद्यमानस्य ईकारान्तस्य उदाहरणं गौरी इति। सर्वदा स्त्रियां विद्यमानस्य ऊकारान्तस्य उदाहरणं वधू इति। अनयोः नदी इति संज्ञा भवति। एतस्मात् सूत्रात् सामान्यतया ह्रस्व-इकारान्तस्य ह्रस्व-उकारान्तस्य च नदीसंज्ञा न भवति इति ज्ञायते।

ईकारान्तेषु ऊकारान्तेषु च नित्यं स्त्रियां विद्यमानेषु शब्देषु केषाञ्चन नदीसंज्ञा निषिध्यते। के च ते?



*dīpaśikhā*/v5/2023/Dr. Sukanta Manna/pp. 16-17

–इयङ्स्थानाः/ उवङ्स्थानाः च नित्यं स्त्रियां विद्यमानाः शब्दाः। अर्थात् येषाम् ईकारान्तानां कदाचित् इयङ्-प्राप्तिप्रसङ्गः अस्ति, येषाम् ऊकारान्तानां च उवङ्-प्राप्तिप्रसङ्गः अस्ति तेषां शब्दानाम्। यथा– श्री इति ईकारान्तः इयङ्स्थानः अस्ति, एवं भ्रू इति ऊकारान्तः उवङ्स्थानः अस्ति। एतादृशस्य शब्दस्य सामान्यतया नदीसंज्ञा निषिध्यते। तत्र 'नेयङुवङ्स्थानावस्त्री' [अष्टाध्यायी १.४.४] इति पाणिनीयं सूत्रम्। तत्रापि पुनः क्वचित् विकल्पेन निषेधः भवति। यदि परम् आम् अथवा ङित् प्रत्ययः अस्ति तर्हि अयं निषेधः विकल्पेन भवति। आमि यथा– **श्री+आम्** इत्यत्र श्री इत्यस्य विकल्पेन नदी संज्ञा निषिध्यते। एवं ङिति यथा– **श्री+ङे** इत्यत्रापि विकल्पेन श्री इत्यस्य नदीसंज्ञा निषिध्यते। तत्र पाणिनीयं सूत्रं तावत्– 'वामि' [अष्टाध्यायी १.४.५] इति 'ङिति ह्रस्वश्च' [अष्टाध्यायी १.४.६] इति च।

अवशिष्टानाम् ईकारान्तानाम्, ऊकारान्तानां, स्त्रीशब्दस्य च नित्यं नदीसंज्ञा भवति।

ह्रस्व-इकारान्तस्य ह्रस्व-उकारान्तस्य च सामान्यतया नदीसंज्ञा न प्राप्ता। ङिति तत्र विकल्पेन नदीसंज्ञा विहिता। तत्र पाणिनीयं सूत्रं तावत्– 'ङिति ह्रस्वश्च' [अष्टाध्यायी १.४.६]। यथा– **मति+ङे** इत्यत्र मति इत्यस्य नित्यं स्त्रियां विद्यमानस्य नदीसंज्ञा विकल्पेन भवति। एवं **धेनु+ङे** इत्यत्र धेनु इत्यस्य नित्यं स्त्रियां विद्यमानस्य विकल्पेन नदीसंज्ञा भवति।

अवशिष्टस्थलेषु नदीसंज्ञा नैव भवति।

**कानिचन प्रयोगस्थलानि** अस्य कानिचन प्रयोगस्थलानि यथा–

१. **आण्नद्याः – गौर्यै।**
गौरी + ङे [गीरी इत्यस्य ईकारान्तत्वात् नित्यस्त्रीलिङ्गकत्वात् नदीसंज्ञा]
गौरी + आट् + ङे [**आण्नद्याः** इति नदीसंज्ञकात् परस्य ङितः आट्]
गौरी + ऐ [आटश्च इत्यनेन वृद्धिः एकादेशः]
गौर्यै [वृद्धिरेचि]

२. **ह्रस्वनद्यापो नुट् – गौरीणाम्।**
गौरी + आम् [गीरी इत्यस्य ईकारान्तत्वात् नित्यस्त्रीलिङ्गकत्वात् नदीसंज्ञा]
गौरी + नुट् + आम् [**ह्रस्वनद्यापो नुट्** इति नदीसंज्ञकात् परस्य आमः नुट्]
गौरी + नाम् [नामि इति अङ्गस्य दीर्घः]
गौरीणाम् [णत्वम्]

३. **ङेराम्नद्याम्नीभ्यः – गौर्याम्।**
गौरी+ङि [गीरी इत्यस्य ईकारान्तत्वात् नित्यस्त्रीलिङ्गकत्वात् नदीसंज्ञा]
गौरी+आम् [**ङेराम्नद्याम्नीभ्यः** इति नदीसंज्ञकात् परस्य ङेः आम्।]
गौरी+आट्+आम् [आण्नद्याः इति ङित्-प्रत्यये परे आडागमः ]
गौर्याम् [आटश्च इति वृद्ध्येकादेशः, यणादेशः]

४. **अम्बार्थनद्योर्ह्रस्वः – नदि।**
नदी+सुँ [सम्बोधने] [नदी इत्यस्य ईकारान्तत्वात् नित्यस्त्रीलिङ्गकत्वात् नदीसंज्ञा]
नदि सुँ [**अम्बार्थनद्योर्ह्रस्वः** इति नदीसंज्ञकस्य अङ्गस्य ह्रस्वादेशः]
नदि [एङ्ह्रस्वात् सम्बुद्धेः इति ह्रस्वान्तात् परस्य सम्बुद्धेः सुँ-प्रत्ययस्य लोपः]

# साधकतमं करणम्

## राहुलमाइतिः

**उपोद्घातः** 'साधकतमं करणम्' [अष्टाध्यायी १.४.४२] इत्यस्मिन् सूत्रे द्वे पदे स्तः– साधकतमम् इति करणम् इति च। उभे अपि पदे प्रथमैकवचनान्ते स्तः। साध्नोतीति साधकम्। कर्तरि अर्थे साध संसिद्धौ धातोः 'ण्वुल्तृचौ' [अष्टाध्यायी ३.१.१३३] इति सूत्रेण ण्वुलि, वोः स्थाने 'युवोरनाकौ' [अष्टाध्यायी ७.१.१] इति अकादेशे च साधकम् इति पदं निष्पद्यते। केचन तु साध्नोत्यनेन इति साधकं 'कृत्यल्युटो बहुलम्' [अष्टाध्यायी ३.३.११३] इति सूत्रे बाहुलकपदानुरोधात् करणे ण्वुलि साधकपदं साधयन्ति, परन्तु तथा बाहुलकात् करणे ण्वुलः कल्पनापेक्षया यथाप्राप्तं कर्तरि ण्वुलि कृते अपि दोषाभावात् व्याख्यान्तरकल्पना नाश्रीयते। ततश्च साधकशब्दात् 'अतिशायने तमबिष्ठनौ' [अष्टाध्यायी ५.३.५५] इति सूत्रेण तमप्प्रत्यये साधकतमम् इति पदं निष्पद्यते, तस्यैव प्रथमायाः एकवचनान्तं पदं साधकतममिति। करणम् इति च कृञ्धातोः 'कृत्यल्युटो बहुलम्' [अष्टाध्यायी ३.३.११३] ल्युटि कृते निष्पन्नं पदम्। साधकतमम् इति हि संज्ञिवाचकं पदं, करणम् इति च संज्ञावाचकं पदम्। सूत्रे 'कारके' [अष्टाध्यायी १.४.२३] इति पदम् अधिक्रियते तच्च प्रथमान्ततया विपरिणमते। अर्थात् साधकतमं कारकं करणसंज्ञकं भवति। वस्तुतः साधकतमम् उद्दिश्य करणसंज्ञा अनेन शास्त्रेण विधीयते।

**सूत्रार्थः** ननु साध्नोति इति साधकं, साध्यते अनेन इति वा साधकम् इति व्युत्पत्त्या किं साधकम् इति कैमर्थ्याकाङ्क्षा जायते। तस्योत्तरम् अस्ति क्रिया इति। अर्थात् क्रियां साध्नोति यत्, क्रिया साध्यते येन इति वा तत् कारकं करणसंज्ञकं भवति। अर्थात् क्रियासिद्धौ यत् प्रकृष्टम् अतिशयितं साधकं तत्कारकं करणसंज्ञकं भवति। तमप्प्रत्ययार्थो हि प्रकृष्टत्वम् अतिशयितं वा। ननु प्रकृष्टत्वं चात्र कीदृशं यतो हि सर्वेषाम् अपि कारकाणां क्रियासिद्धौ उपकारकत्वं वर्तते एव। तदोच्यते नागेशेन– अतिशयश्च "यद्व्यापारानन्तरम् अव्यवधानेन फलोत्पत्तिस्तत्त्वम्"[१२] अर्थात् यत्कारकनिष्ठाव्यापारानन्तरं क्रियोत्पत्तिः तस्यैव कारकस्य करणसंज्ञा भवतीति सूत्रार्थः। उक्तञ्च वाक्यपदीये भर्तृहरिणापि–

क्रियायाः फलनिष्पत्तिर्यद्व्यापाराद् अनन्तरम्।
विवक्ष्यते यदा यत्र करणं तत्तदा स्मृतम्॥ [वाक्यपदीयम् ३.७.९०]

उदाहरणञ्च– रामेण बाणेन हतो वाली इति। अत्र हननक्रियायां रामस्य यथा उपकारकत्वं वर्तते, तद्वत् बाणस्यापि, वालिनः अपि। तथापि बाणनिष्ठव्यापारानन्तरम् एव हननक्रियासिद्धौ बाणस्य प्रकृष्टोपकारकत्वाद् अनेन शास्त्रेण करणसंज्ञा भवति। करणसंज्ञकत्वाच्च 'कर्तृकरणयोस्तृतीया' [अष्टाध्यायी २.३.१८] इति सूत्रेण तृतीयाविभक्तिः भवति।

**तमपः वैय्यर्थम्** ननु यद् उक्तं प्रकर्षविवक्षायां सूत्रे अस्मिन् तमब्ग्रहणं, तन्नापेक्षते। यतो हि अस्मिन् सूत्रे 'कारके' [अष्टाध्यायी १.४.२३] इति सूत्रस्याधिकारः वर्तते, तत्र च कारके इति पदं कृञ्धातोः ण्वुलि करोतीति कारकं इति व्युत्पत्त्या निष्पादितः। किं करोति इति चेत् क्रियां करोति इति कारकम्। अस्य सूत्रस्य भाष्ये अपि इदं पदं पदान्तरेणाह भाष्यकृत् "साधकं निर्वर्तकं कारकसंज्ञं भवतीति"[१३]। कारकपर्यायवाचकत्वे साधकशब्दं च बहुत्र निर्वक्ति भाष्यकृत्। तद्यथा 'उपपदमतिङ्' [अष्टाध्यायी

[१२] 'साधकतमं करणम्' [अष्टाध्यायी १.४.४२] इति सूत्रस्य महाभाष्यस्य उद्द्योतटीकायाम्।
[१३] 'कारके' [अष्टाध्यायी १.४.२३] इति सूत्रस्य महाभाष्यम्।

२.२.१९] इति सूत्रभाष्ये आह– “साधनं हि क्रियां निर्वर्तयति इति”, “अन्वर्थम् इति चेद् अकर्तरि कतृशब्दानुपपत्तिः” इति वार्तिके अपि कारकपदस्य अन्वर्थत्वं नाम करोतीति कारकम् इति यदा आश्रीयते तदा अकर्तरि कर्तृशब्दः उपपद्यते इति आशङ्का कृता कैयटेन[१४]। अनेनापि ज्ञायते यत् करोति इति व्युत्पत्त्या क्रियां करोति इत्येव आशयः भाष्यकारस्य। अतः कारके इति यत् पदं सूत्रे उपतिष्ठते तस्यार्थः “क्रियानिर्वर्तकम्” इति, तच्च साधकसमानार्थकम् एव। अतः क्रियासिद्धौ यद् उपकारकं तत्कारकम् इति व्युत्पत्त्या अपि कारकशब्दाद् एव साधकार्थः लब्धः, अतः सूत्रे साधकग्रहणं व्यर्थं भवति। तद् एव व्यर्थं सत् अतिशयेन यत् साधकम् इति प्रकर्षार्थं ज्ञापयिष्यति, अतः नात्र प्रयोजनं किञ्चित् पश्यामि तमब्ग्रहणस्य। इत्येतत्सर्वं प्रकरणं बुद्ध्या विविच्य भाष्यकारैः उक्तं– “तमब्ग्रहणं किमर्थम् इति”[१५]। साधकं करणम् इत्येव उच्यताम्। अस्य तात्पर्यम् इत्थम् अस्ति यत् काराकाधिकाराद् एव साधकत्वे लब्धे यद् अत्र साधकग्रहणं करोति आचार्यः तज्ज्ञापयति प्रकृष्टेन यद् उपकारकं तस्यैव करणसंज्ञा भवति। प्रकर्षश्चात्र पूर्वोक्तः नागेशसम्मतः एव। अतः नार्थः तमब्ग्रहणेन।

**तमपः ग्रहणाभावे दोषः** तमब्ग्रहणाभावे दोषम् उद्भावयन्नाह आचार्यः– साधकं करणम् इत्युच्यमाने सर्वेषां कारकाणां करणसंज्ञा प्रसज्येत। यतो हि अपादानादीनि सर्वाण्यपि कारकाणि क्रियासिद्धौ साधकानि एव भवन्ति। परन्तु तमब्ग्रहणे क्रियमाणे अयं दोषो न भवतीति।

**दोषपरिहारः** तत्रोच्यते तमब्ग्रहणाभावे अपि दोषोऽयं निवारयितुं शक्यते, कथम् इति चेद् उच्यते– करणसंज्ञायाः प्राग् याः संज्ञाः उक्ताः ताः अपवादत्वात् भविष्यन्ति, अर्थाद् अपादानविषये यदि करणसंज्ञा प्रसज्येत तर्हि न क्वचिद् अपादानस्य प्रसक्तिः इति कृत्वा, निरवकाशविधिः बलवती भवति इत्यतः अपादानादिविषये करणसंज्ञा न स्यात्, उक्तञ्च भाष्यकृद्भिः– “अपादानसंज्ञाम् उत्तराणि कारकाणि बाधन्ते”[१६] इति। कर्मादिषु परसंज्ञाविषयेषु चोच्यते परत्वात् करणसंज्ञायाः ताः बाधिकाः भविष्यन्ति, अतः तमब्ग्रहणाभावे अपि दोषः नास्ति इति तात्पर्यम्।

**पुनः शङ्का तत्परिहारश्च** ननु धनुषा विध्यति इत्युदाहरणे अपायक्रियायुक्तत्वात् धनुषः अपादानसंज्ञा प्राप्नोति, क्रियासाधकत्वाच्च करणसंज्ञा प्राप्नोति, उभयोः संज्ञयोः कतरा स्याद् इति सन्देहः जायते, तत्र सर्वासु संज्ञासु करणसंज्ञायाः अवकाशः अस्ति, इत्यतः सा सावकाशा, अपादानसंज्ञा तु अपायक्रियासिद्धौ एव प्राप्ता, अतः इयं संज्ञा निरवकाशाविधिः, अतः निरवकाशत्वात् अपादानसंज्ञा एव स्यात् इति दोषे प्राप्ते, तमब्ग्रहणे क्रियमाणे प्रकृष्टोपकारकत्वात् करणसंज्ञा एव स्यात्, इति दोषस्य परिहारः सम्भवतीति चेद् उच्यते तमब्ग्रहणाभावे अपि प्रकर्षः गम्यते एव। ननु तमब्ग्रहणाभावे कथं प्रकर्षः गम्येत इति चेद् आह– लोकतः एतत् सिद्धं भवति। लोके यथा प्रकृष्टम् आश्रित्यैव कार्याणि सिध्यन्ति, तद्वद् इह व्याकरणे अपि। लोके यथा अभिरूपाय कन्या देया इत्यस्य अभिरूपतमाय कन्या देया इति तात्पर्यार्थः गम्यते तद्वद् अत्रापि सर्वेषां कारकाणां करणत्वे सिद्धे प्रकृष्टोपकारकस्यैव करणत्वं स्वतः सिध्यतीति भाष्यकृदाशयः। तदेवाह भाष्यकारः प्रकृतसूत्रभाष्ये “सर्वाणि च कारकाणि साधकानि न चासाधके प्रवृत्तिरिति तत्र साधकतमम् इति विज्ञायते”।[१७]

**तमब्ग्रहणेन ज्ञाप्यं वचनम्** ननु तर्हि तमब्ग्रहणं व्यर्थम् इति तु साधितम्, इदानीं तर्हि किं तत्पदं

[१४] ‘कारके’ [अष्टाध्यायी १.४.२३] इति सूत्रस्य महाभाष्यस्य प्रदीपव्याख्यायाम् (द्वितीयखण्डः)।
[१५] ‘कारके’ [अष्टाध्यायी १.४.२३] इति सूत्रस्य महाभाष्यम्।
[१६] ‘आकडारादेका संज्ञा’ [अष्टाध्यायी १.४.१] इति सूत्रस्य महाभाष्ये।
[१७] ‘कारके’ [अष्टाध्यायी १.४.२३] इति सूत्रस्य महाभाष्ये।

सूत्रे पठनीयम् उत त्यक्तुं शक्यम् इति चेद् वृद्धिरेचिस्थं भाष्यं स्मर्यते विद्वद्भिः– "प्रमाणभूत आचार्यो दर्भपवित्रपाणिः शुचाववकाशे प्राङ्मुख उपविश्य महता यत्नेन सूत्राणि प्रणयति स्म। तत्राशक्यं वर्णेनाप्यनर्थकेन भवितुम्" [१८] अतः तमब्ग्रहणं व्यर्थं सत् ज्ञापकं भविष्यति, किं तज्ज्ञापनम् इति चेद् आह– कारकसंज्ञायां तरतमयोगं विना प्रकर्षः गम्यते चेद् तादृशः प्रकर्षः नाश्रीयते। शब्दसामर्थ्यगम्यः प्रकर्षः नाश्रीयते इति यावत्। प्रकृते च साधकपदेन सः प्रकर्षः गम्यते इत्यतः एतादृशः प्रकर्षः आश्रयितुं न शक्यते। ननु किमिदं प्रकर्षे निषेधः क्रियते, प्राप्तिपूर्वकं हि निषेधः, अतः प्रकृष्टे प्राप्तिः कथम् आसीत् यत् तत्र निषेधः विधीयते इति चेत्, प्रकृष्टाप्रकृष्टयोः प्रकृष्टस्यैव ग्रहणं तु लोकतः एव सिद्धं तद्यथा दृश्यते लोके शास्त्रे च गौण्यमुख्ययोः उभयोः कार्यसम्भवे मुख्ये एव कार्यप्रवृत्तिरिति। लोकसिद्धमेव सिद्धान्तं परिभाषात्वेन पठति आचार्यः– "गौणमुख्ययोः मुख्ये कार्यसम्प्रत्ययः"। अर्थात् गौणे मुख्ये च उभयत्र कार्ये प्राप्ते स्वतः एव मुख्ये कार्यं सिध्यति। लोकन्यायानुरोधेन तु सर्वदैव मुख्ये एव कार्यं स्यात् गौणे च न स्यात्। अतः यदि कारकप्रकरणे अपि मुख्ये कार्यप्रवृत्तिः स्यात् तर्हि बहवः दोषाः आपद्यन्ते। के च ते दोषाः इति अग्रे निरूपयिष्ये। अतः तान् दोषान् निवारयितुम् अस्याः परिभाषायाः कृत्स्ने व्याकरणे प्रवृत्तावपि कारकप्रकरणे नेयम् आश्रीयते। इदम् अत्र अवधेयं यत् सामर्थ्यगम्यः प्रकर्षः आश्रीयते इत्यस्यैव तात्पर्यम् अस्ति गौणमुख्ययोः मुख्ये कार्यसम्प्रत्ययः। अत्र प्रकरणे वस्तुतः द्वाभ्यां युक्तिभ्यां तमब्ग्रहणं खण्ड्यते।

**प्रथमा युक्तिः**– कारकाधिकारेणैव साधकत्वे लब्धे पुनः साधकग्रहणं व्यर्थं सत् ज्ञापयति प्रकृष्टस्यैव ग्रहणं भवति अतः तमब्ग्रहणं न कर्तव्यम्।

**द्वितीया युक्तिः**– लोके यथा सामान्ये विशेषे च कार्ये प्राप्ते विशेषस्यैव ग्रहणं क्रियते तद्वद् अत्रापि शास्त्रे साधकस्य साधकतमस्य च करणसंज्ञायां प्राप्तायां साधकतमस्यैव तद् भविष्यति इति लोकन्यायसिद्धत्वाद् एव इष्टे सिद्धे तमब्ग्रहणं नापेक्षते।

तथापि सूत्रे तमब्ग्रहणेन इदम् एव ज्ञापितं यत् शब्दसामर्थ्यगम्यः प्रकर्षः अत्र कारकप्रकरणे नाश्रीयते, अर्थात् पूर्वं याभ्यां युक्तिभ्यां प्रकर्षः लब्धः तादृशः प्रकर्षः अत्र कारकप्रकरणे नाश्रीयते इति। गौणमुख्ययोः मुख्ये कार्यसम्प्रत्ययः इति परिभाषा वा कारकप्रकरणे नाश्रीयते इति यावत्।

**ज्ञापकस्य फलम्** उक्तपरिभाषायाः कारकप्रकरणेऽपि प्रवृत्तौ के दोषाः तद् अत्र ज्ञापकफलमुखेन उच्यन्ते। तिलेषु तैलम् इत्यत्र यथा तिलस्य अधिकरणसंज्ञा तद्वत् वटे गावः, कूपे गर्गकुलम् इत्यत्रापि वटादीनां अधिकरणसंज्ञा भविष्यतीति। ननु किं कारणं न प्राप्नोति इति चेद् आलोच्यते अत्र– 'आधारोऽधिकरणम्' [अष्टाध्यायी १.४.४५] इत्यनेन हि सूत्रेण अधिकरणसंज्ञा विधीयते। अस्मिन् सूत्रे आधारग्रहणाभावे अपि अधिक्रियते अस्मिन्निति व्युत्पत्त्या अधिकरणपदेनैव आधारे लब्धे आधारग्रहणं व्यर्थं भवति, तदेव पदं व्यर्थं सत् ज्ञापयति यत्र सर्वैः अवयवैः सह अवयवी व्याप्तो वर्तते तत्रैव अधिकरणसंज्ञा स्यात्, यत्र च आधेयः कृत्स्नम् आधारं व्याप्य न तिष्ठति तत्र अधिकरणसंज्ञा न स्यात्, अर्थात् मुख्याधारस्यैव अधिकरणसंज्ञा स्यात् गौणस्य च न स्यात्। तथा सति तिलेषु तैलमित्यत्र मुख्याधिकरणस्यैव अधिकरणसंज्ञा भवति, तैलस्य तिलं व्याप्य स्थितत्वात्, गङ्गायां घोषः इत्यादिषु घोषस्य गङ्गाव्यापकत्वात् अधिकरणसंज्ञा न स्यात्। इष्यते च उभयत्रापि अधिकरणसंज्ञा। अतः एव कारकप्रकरणे सामर्थ्यगम्यः प्रकर्षः नाश्रीयते इति सिद्धान्तानुरोधात् गौणस्यापि आधारस्य अधिकरणसंज्ञां साधयितुं शक्यते।

इत्थम् एव अन्यद् एकं प्रयोजनम् आह भाष्यकृत्– अपादानम् इति महासंज्ञया यदि प्रकृष्टस्यैव

[१८] 'वृद्धिरादैच्' [अष्टाध्यायी १.१.१] इति सूत्रस्य महाभाष्ये।

ध्रुवस्य अपादानसंज्ञा स्यात् तर्हि ग्रामाद् आगच्छति इत्यत्र मुख्यस्य ध्रुवस्यैव अपादानसंज्ञायां सत्याम् अपि सांकाश्यकेभ्यः पाटलिपुत्रकाः अभिरूपतराः इत्यत्र गौणस्य ध्रुवस्य अपादानसंज्ञा न स्यात्। परन्तु शब्दसामर्थ्यगम्यप्रकर्षस्य अनाश्रयणे गौणस्यापि ध्रुवपदार्थस्य अपादानसंज्ञा सिध्यति, येन सांकाश्यस्यापि अपादानसंज्ञा निर्बाधा।

**स्वांशे चारितार्थ्यम्** साधकतमं करणम् इति सूत्रे तमब्ग्रहणाभावे सूत्रं भवति साधकं करणम् इति। कारकाधिकारात् साधकत्वे लब्धे पुनः साधकश्रुतिः व्यर्था सती प्रकर्षं ज्ञापयिष्यति। परन्तु शब्देन गम्यमानस्य सामर्थ्यस्य अनाश्रयणात् गौणस्यापि साधकस्य करणसंज्ञा स्यात्, तेन रामः बाणेन वालिनं हतवान् इत्यत्र रामस्यापि करणसंज्ञापत्तिः। परन्तु तमब्ग्रहणे क्रियमाणे दोषो न भवति। तमब्ग्रहणे क्रियमाणे प्रकर्षः प्रत्ययगम्यः न तु शब्दसामर्थ्यगम्यो भवति। अतः तदा तु प्रकृष्टमाश्रयितुं शक्यते, तेन प्रकृष्टस्यैव साधकस्य करणसंज्ञा सिध्यति। सारांशस्तु इत्थं– शब्दसामर्थ्यगम्यस्य प्रकर्षस्य कारकप्रकरणे आश्रयाभावात् सर्वेषाम् अपि कारकाणां क्रियासिद्धौ उपकारकत्वात् सर्वेषाम् अपि कारकाणां करणसंज्ञायां प्राप्तायाम् अनेन तमब्ग्रहणेन प्रकृष्टोपकारकस्यैव करणसंज्ञा सिध्यति, इति तमब्ग्रहणं स्वांशे चरितार्थं भवति।

**सिद्धान्तविन्दवः**

क्रियासिद्धौ यत् प्रकृष्टम् उपकारकं तस्यैव करणसंज्ञा भवति। प्रकृष्टत्वं चात्र यन्निष्ठव्यापारानन्तरं क्रियोत्पत्तिः तत्त्वम्।

साधकतमं सूत्रे प्रकर्षार्थः साधकपदेन गम्यमानेऽपि तदर्थं कृतं तमप्प्रत्ययग्रहणं व्यर्थं सत् शब्दसामर्थ्यगम्यः प्रकर्षः कारकप्रकरणे नाश्रीयते इति ज्ञापयति।

गौणमुख्ययोः मुख्ये कार्यसम्प्रत्ययः इति न्यायः कारकप्रकरणे इदं सूत्रं विहाय न क्वचित् प्रवर्तते।

गौणमुख्ययोः मुख्ये कार्यसम्प्रत्ययः इति न्यायस्यैव फलम् अस्ति– शब्दसामर्थ्यगम्यः प्रकर्षः आश्रीयते इति।



# आदिरन्त्येन सहेता इति सूत्रस्य लघुशब्देन्दुशेखरोक्तः विचारः

राजद्वीपः घोषः

**सूत्रस्वरूपम्** षड्विधेषु पाणिनीयसूत्रेषु इदं संज्ञासूत्रम्।

**पदच्छेदः** आदिः (प्रथमैकवचनान्तमं पदम्); अन्त्येन (तृतीयैकवचनान्तं पदम्); सह(अव्ययपदम्); इता(तृतीयैकवचनान्तं पदम्)।

**सूत्रव्याख्या** **अन्त्येन इता सह आदिः** इति सम्पूर्णं सूत्रं संज्ञा। यस्मात् पूर्वं नास्ति परम् अस्ति स आदिः। पुनः यस्मात् परं नास्ति, पूर्वं च अस्ति, सः अन्तः। अन्ते भवः अन्त्यः अन्तिमः इत्यर्थः। अत्र आद्यन्तशब्दाभ्यां मध्यगाः आक्षिप्यन्ते। एतेषां मध्यगानाम् अत्र संज्ञित्वम्। किञ्च 'स्वं रूपं शब्दस्याशब्दसंज्ञा' इत्यस्मात् सूत्रात् स्वम् इति पदम् अत्र अनुवर्तते। तस्य च अत्र सूत्रे 'स्वस्य' इति षष्ठ्यन्ततया विपरिणामः। तस्यापि संज्ञित्वम्। स्वपदेन आदिः बोध्यते।

**सूत्रार्थः** 'अन्त्येन इता सहितः आदिः मध्यगानां स्वस्य च संज्ञा भवति' इति अस्य सूत्रस्य अर्थः।

**सूत्रस्य परिष्कृतार्थः** अन्येत्-सदृशसहितः यः आदिसदृशः सः स्वघटकानुयोगिक-सादृश्यप्रतियोगित्वेन विवक्षितवर्णनिष्ठान्तताानिरूपकस्य स्वघटकानुयोगिक-सादृश्यप्रतियोगित्वेन विवक्षित-वर्णनिष्ठादिता-निरूपकस्य समुदायस्य घटकानां संज्ञा।

**सूत्रार्थसमन्वयः** स्वम्- अच्; तद्-घटकः चकारः; तदनुयोगिकसादृश्यप्रतियोगित्वेन विवक्षितः वर्णः ऐऔच्- इत्यस्य चकारः; तन्निष्ठान्तताानिरूपकसमुदायः अकारादि-चान्त-समुदायः। पुनः, स्वम्- अच्; तद्-घटकः अकारः; तदनुयोगिकसादृश्यप्रतियोगित्वेन विवक्षितः वर्णः अइउण्- इत्यस्य अकारः; तन्निष्ठादितानिरूपकसमुदायः अकारादि-चान्त-समुदायः; तस्य समुदायस्य ये घटकाः सन्ति, तेषाम् 'अच्' इति संज्ञा।

**उदाहरणम्** अण् ,एच्, अक्, अच्, हल्, अल् इत्यादीनि।

माहेश्वरसूत्रेषु अ-इति वर्णेन सह ण्-इति अन्त्येन इत्संज्ञकवर्णेन सह मेलनं कृत्वा अण्-इति लभ्यते। माहेश्वरसूत्रेषु अ-इति वर्णाद् आरभ्य ण्-इति इत्संज्ञकवर्णं यावत् मध्ये इ उ इति द्वौ वर्णौ स्तः। तस्माद् अन्त्येन ण्-इति इत्संज्ञकेन सह आदिः अण् इति मध्यगानाम् इ उ इति एतयोः स्वस्य च अर्थाद् आदेः अकारस्य च संज्ञा भवति इति समन्वयः। अर्थाद् अण्-इति शब्दः अ इ उ -इति एतेषां वर्णानां संज्ञा भवति। एवम् अन्त्येन च्- इति इत्संज्ञकेन सह आदिः एच्- इति वर्णः, मध्यगानाम् ओ ऐ औ इति एतेषां किञ्च स्वस्य अर्थाद् आदेः एकारस्य च संज्ञा भवति। अर्थाद् एच्- इति शब्दः ए ओ ऐ औ -इति चतुर्णां वर्णानां संज्ञा भवति। इत्थम् अक्, अच्, हल्, अल् इत्यादयः प्रत्याहाराः अपि सिद्ध्यन्ति।

**आदेः स्वरूपम्** स्वघटकत्वं, स्वघटकाव्यवहितपूर्वत्वं, स्वघटकाव्यवहितोत्तरत्वाभाववत्त्वम् एतत्त्रितयसम्बन्धेन समुदायवृत्तित्वम् आदित्वम्। तेन आदेः लक्षणं भवति– स्वघटकत्व-


*dīpaśikhā*/v5/2023/Rajdip Ghosh/pp. 22-24

स्वघटकाव्यवहितपूर्वत्व-स्वघटकाव्यवहितोत्तरत्वाभाववत्त्वान्यतमसम्बन्धेन समुदायविशिष्टत्वम्। इदानीं लक्षणस्य समन्वयः क्रियते। समन्वयार्थं 'लिह्'- इति शब्दः गृह्यते। लिह्- इत्यत्र ल् इ ह् एते त्रयः घटकाः सन्ति। तेषु आदिः अस्ति लकारः। अतः लकारे लक्षणस्य समन्वयः क्रियते।

i) **स्वघटकत्वम्–** स्वं-लिह्; तद्-घटकः लकारः; तद्-घटकत्वं लकारे अस्ति।

ii) **स्वघटकाव्यवहितपूर्वत्वम्–** स्वं- लिह्; तद्-घटकः इकारः; तदव्यवहितपूर्वः लकारः; तदव्यवहितपूर्वत्वम् लकारे अस्ति।

iii) **स्वघटकाव्यवहितोत्तरत्वाभाववत्वम्–** स्वं- लिह्; तद्-घटकः इकारः; तदव्यवहितोत्तरः हकारः; तदव्यवहितोत्तरत्वं हकारे; तदव्यवहितोत्तरत्वाभाववत्त्वं लकारे अस्ति।

इत्थं लकारः स्वघटकत्वं, स्वघटकाव्यवहितपूर्वत्वम्, स्वघटकाव्यवहितोत्तरत्वाभाववत्वम् इति सम्बन्धत्रयेण लिह् इति समुदाये वर्तते इति कृत्वा लकारः लिह् इति समुदायस्य आदिः। अत्र अभ्रं लिह् इत्यादिषु अनुस्वारस्य लिह् इति समुदायादित्ववारणाय स्वघटकत्वनिवेशः। हकारस्य आदित्ववारणाय स्वघटकाव्यवहितपूर्वत्वनिवेशः। एकवर्णात्मकसमुदायस्थले व्यपदेशिवद्भावेन एकस्य एव आदित्वसाधनाय स्वघटकाव्यवहितोत्तरत्वाभाववत्वनिवेशः।

**अन्त्यस्य स्वरूपम्** एवम् एव स्वघटकत्वं, स्वघटकाव्यवहितोत्तरत्वं, स्वघटकपूर्वत्वाभाववत्त्वम् इत्येतत् त्रितयसम्बन्धेन समुदायवृत्तित्वम् अन्त्यत्वम्। तेन अन्त्यस्य लक्षणं भवति– स्वघटकत्व-स्वघटकाव्यवहितोत्तरत्व-स्वघटकपूर्वत्वाभाववत्त्वान्यतमसम्बन्धेन समुदायविशिष्टत्वम् इति। इदानीम् अस्य लक्षणस्य समन्वयः क्रियते। समन्वयार्थं 'लिह्'- इति शब्दः गृह्यते। लिह्- इत्यत्र ल् इ ह्- एते त्रयः घटकाः सन्ति। तेषु अन्त्यः अस्ति हकारः। अतः हकारे लक्षणस्य समन्वयः क्रियते।

i) **स्वघटकत्वम्–** स्वं– लिह्; तद्-घटकः हकारः; तद्घटकत्वं हकारे अस्ति।

ii) **स्वघटकाव्यवहितोत्तरत्वम्–** स्वं– लिह्; तद्-घटकः इकारः; तदव्यवहितोत्तरः हकारः; तदव्यवहितोत्तरत्वं हकारे अस्ति।

iii) **स्वघटकपूर्वत्वाभाववत्त्वम्–** स्वं– लिह्; तद्घटकः- इकारः; तद्घटकपूर्वः लकारः; तद्घटकपूर्वत्वं लकारे; तद्घटकपूर्वत्वाभाववत्त्वं हकारे।

इत्थं हकारः स्वघटकत्वं, स्वघटकाव्यवहितोत्तरत्वं, स्वघटकपूर्वत्वाभाववत्त्वम् इति सम्बन्धत्रयेण लिह् इति समुदाये वर्तते इति कृत्वा हकारे लक्षणस्य समन्वयः सम्भवति। अत्रापि पूर्ववत् दलकृत्यं द्रष्टव्यम्।

**मध्यस्य स्वरूपम्** स्वघटकत्व-स्वघटकपूर्वत्व-स्वघटकोत्तरत्वान्यतमसम्बन्धेन समुदायवृत्तित्वं मध्यस्य लक्षणम्। लिह्- इत्यत्र मध्यः अस्ति इकारः। अतः इकारे लक्षणस्य समन्वयः क्रियते।

i) **स्वघटकत्वम्–** स्वं– लिह्; तद्घटकः इकारः; तद्-घटकत्वम् इकारे अस्ति।

ii) **स्वघटकपूर्वत्वम्–** स्वं– लिह्; तद्घटकः हकारः; तद्-घटकपूर्वः इकारः; तद्-घटकपूर्वत्वम्– इकारे।

iii) **स्वघटकोत्तरत्वम्–** स्वं– लिह्; तद्घटकः लकारः; तद्घटकोत्तरः इकारः; तद्-घटकोत्तरत्वम् इकारे।

एतेन 'लिह्'- इत्यत्र इकारः मध्यः अस्ति इति सिध्यति।

**सूत्रे आदिग्रहणस्य प्रयोजनम्** सूत्रेऽस्मिन् 'आदि'- इति पदं न दीयते चेत् सूत्रस्य स्वरूपं भवति

'अन्त्येन सहेता' इति। तदा सूत्रस्यास्य अर्थः भवति- अन्त्येन इता सह उच्चार्यमाणः अन्त्यात् पूर्वभाविनां संज्ञा स्यात् इति। यथा- हल् इति। अत्र अन्त्यः इत् अस्ति लकारः। तत्सहितः आदिः अस्ति हल्। सः हल् लकारात् पूर्वं ये अकारादयः वर्णाः सन्ति, तेषाम् हल् इति संज्ञां करोति, तेन स्वरवर्णानाम् अपि हल्संज्ञा स्यात्। अतः हल्-प्रत्याहारे अकारादीनां ग्रहणं यथा न भवेत्, तदर्थं सूत्रे आदिपदम् उपात्तम्। आदिग्रहणे सति आद्यन्तयोः मध्ये ये वर्णाः सन्ति तेषामेव संज्ञा भवति, अन्यस्य कस्यापि संज्ञा न भवति।

**सूत्रे अन्त्यग्रहणस्य प्रयोजनम्** अस्मिन् सूत्रे 'अन्त्य'- इति पदं न दीयते चेत् सूत्रस्य स्वरूपं भवति 'आदिना सहेता' इति। तदा सूत्रस्यास्य अर्थः भवति- इता सह उच्चार्यमाणः आदिः आदेः परेषां च संज्ञा स्यात् इति। यथा- अच् इति। अत्र अन्त्यः इत् अस्ति चकारः। तत्सहितः आदिः अस्ति अच्। सः अच् आदेः अकारात् परं ये वर्णाः सन्ति, तेषाम् अच् इति संज्ञां करोति, तेन व्यञ्जनानाम् अपि अच्संज्ञा स्यात्। अतः अच्-प्रत्याहारे हकारादीनां ग्रहणं यथा न भवेत्, तदर्थं सूत्रे अन्त्यपदम् उपात्तम्। अन्त्यग्रहणे सति आद्यन्तयोः मध्ये ये वर्णाः सन्ति तेषामेव संज्ञा भवति, अन्यस्य कस्यापि संज्ञा न भवति।

**सूत्रे इता-ग्रहणस्य प्रयोजनम्** सूत्रेऽस्मिन् 'इता' इति पदं न दीयते चेत् सूत्रस्य स्वरूपं भवति 'आदिरन्त्येन सह' इति। तदा सूत्रस्यास्य अर्थः भवति- अन्त्येन सह आदिः मध्यगानां स्वस्य च संज्ञा स्यात् इति। ततश्च यम्-इति प्रत्याहारः ञमङणनम् इति सूत्रस्थेन अन्त्येन मकारेण न स्यात्, अपितु आदिना मकारेण स्यात्। तेन यम्-प्रत्याहारे ञकारादीनां ग्रहणं न स्यात्, अतः यम्-प्रत्याहारे ञमङणनम् इति सूत्रस्थस्य अन्त्यस्य मकारस्यापि ग्रहणं यथा भवेत्, तदर्थं सूत्रे इता इति पदम् उपात्तमिति शिवम्।



# स्वामिसारदानन्दकृतः श्रीश्रीरामकृष्णलीलाप्रसङ्गः

अनुवादकौ– डॉ. राकेशदाशः, शान्तनुनायेकः

## प्रथमः खण्डः – प्रथमः अध्यायः (युगप्रयोजनम्)

### पाश्चात्त्यस्य इव उन्नतिलाभाय स्वार्थपरैः भोगलोलुपैश्च भवितव्यम्

पाश्चात्त्यजीवनस्य पूर्वोक्तस्य इतिहासस्य पर्यालोचनया अस्माभिः ज्ञातुं शक्यते यत्, तस्य विस्तारस्य मूलं विषयप्रवणता, स्वार्थपरता धर्मविश्वासराहित्यञ्च। अतः वैयक्तिके सामूहिके च जीवने पाश्चात्त्यस्य इव फललाभाय स्वेच्छया अनिच्छया वा तस्य आधारस्य उपरि एव स्वजीवनप्रतिष्ठा कर्तव्या। तस्माद् द्रष्टुं शक्यते यत्, जापानीयप्रभृतयः याः प्राच्यजातयः पाश्चात्त्यभावेन राष्ट्रियजीवनसंरचनायां तत्पराः भवन्ति, स्वराष्ट्रप्रीत्या स्वजातिप्रीत्या च सह तासु पूर्वोक्तानां सर्वेषां दोषाणाम् अपि आविर्भावः भवति। पाश्चात्त्यभावेन भावितस्य सः एव विषमः दोषः। पाश्चात्त्यसंसर्गेण भारतस्य राष्ट्रियजीवनस्य या स्थितिः उदिता, तस्य जीवनस्य अनुशीलनेन तद् वयं स्पष्टरूपेण ज्ञास्यामः।

### भारतस्य प्राचीनराष्ट्रीयजीवनस्य आधारः

अत्र आदौ एव प्रश्नो भवति– पाश्चात्त्यसंसर्गात् पूर्वं 'राष्ट्रियं जीवनम्' इत्येकं वाक्यं भारतवर्षे आसीद् न वेति। अस्य प्रश्नस्य उत्तरत्वेन वक्तव्यं यत्, तद् वाक्यं नोच्चारितम् अपि तस्य वाक्यस्य वाच्यः अर्थः केनचिद् रूपेण आसीद् इत्यत्र नास्ति सन्देहस्य अवकाशः। यतो हि तस्मिन्नपि काले भारतवर्षे श्रीगुरौ, गङ्गायां, गायत्र्यां, गीतायाञ्च श्रद्धानम् आसीत्, तस्मिन्नपि काले गोकुलपूजा तस्य सर्वप्रदेशेषु परिलक्षिता आसीत्, तस्मिन्नपि काले आबालवृद्धनरनारि रामायणमहाभारतादिभ्यः सर्वेभ्यः धर्मग्रन्थेभ्यः समानम् एव भावतरङ्गं हृदयेन वहत् स्वजीवनं परिचालयति स्म, तस्य विभिन्नप्रकारकाः विद्वांसश्च स्वीयस्वीयमनसो भावं देवभाषया परस्परं प्रति व्यक्तीकर्तुं समर्थाः आसन्। तथैव इतोऽपि बहुविषयाः एकतायाः सूत्रत्वेन उल्लेखितुं शक्यन्ते, अपि च धर्मभावः धर्मानुष्ठानञ्च तस्याः एकतायाः परम् अवलम्बनम् आसीद् इति निश्चप्रचम्।

### तद् धर्मे प्रतिष्ठितम् आसीद् इति हेतोः भोगसाधनविषये भारतसमाजे कदापि विवादः न जातः

भारतवर्षस्य राष्ट्रियजीवनं तादृशरूपेण धर्मम् अवलम्ब्य प्रतिष्ठितम् आसीद् इति हेतोः तस्य सभ्यता सुन्दरीभिः विभिन्नाभिः सामग्रीभिः आविर्भूतासीत्। एकेन वाक्येन वक्तव्यं चेत्, संयमः एव तस्याः सभ्यतायाः प्राणभूतः आसीत्। व्यक्त्यै तथा समूहाय उभाभ्याम् अपि संयमम् अवलम्ब्य स्वस्वजीवनं नियन्तुं शिक्षां प्रददाति स्म भारतम्। त्यागाय भोगग्रहणं परजीवनाय च एतज्जीवनस्य शिक्षा— वाक्यमिदं सर्वान् सर्वावस्थायां स्मारयित्वा व्यक्तेः जातेश्च व्यावहारिकजीवनं तत् सर्वदा उन्नततमं लक्ष्यं प्रापयति स्म। तस्माद् एव तस्य वर्णविभागः जातिविभागः वा एतावत्कालपर्यन्तं कस्याः अपि श्रेण्याः स्वार्थपीडनं कृत्वा तेषां विषमासन्तोषस्य कारणं न बभूव। कारणं, समाजस्य यस्यां श्रेण्यां


*dīpaśikhā*/v5/2023/Dr. Rakesh Das, Santanu Nayek/pp. 25-27

स्तरे वा मानवः जन्मग्रहणं कृतवान्, तस्य स्तरस्य कर्तव्यं कर्म निष्कामभावेन क्रियते चेदेव सः यदा अन्येन सह समभावेन मानवजीवनस्य मुख्योद्देश्यभूतस्य ज्ञानस्य मुक्तेश्च अधिकारी भविष्यति, तदा तस्य तस्य असन्तोषस्य कारणं किं वा भविष्यति? श्रेणीविशेषस्य भोगसुखस्य विविधताम् अधिकृत्य पाश्चात्त्यसमाजे इव भारतीयसमाजे प्राचीनकालात् विरोधः न उपस्थितः, तस्य कारणम्— जीवनस्य उन्नततमे लक्ष्ये समाजस्थस्य प्रत्येकं जनस्य समानाधिकारः आसीद् इति हेतोः। प्राचीनभारतस्य राष्ट्रियजीवनविषये पूर्वोक्तानि वाक्यानि मनसि निधाय द्रष्टव्यं, पाश्चात्त्यसंसर्गे तस्य जीवने कीदृशानि सर्वाणि परिवर्तनानि इदानीं समुपस्थितानि।

## पाश्चात्त्यस्य भारताधिकारः तत्फलञ्च

पाश्चात्त्यस्य भारताधिकारदिनाद् आरभ्य भारतवर्षस्य राष्ट्रियधनविभागविधौ विशेषेण परिवर्तनं भविष्यति इति स्वाभाविकम् अवश्यम्भावि च। परन्तु भारतवर्षस्य राष्ट्रियजीवनस्य तन्मात्रं भागं परिवर्त्यैव पाश्चात्त्यप्रभावः न निवृत्तः। प्राचीनकालाद् आरभ्य यान् मूलसंस्कारान् आधारीकृत्य भारत-भारती वैयक्तिकं जातीयं च जीवनं परिचालयति स्म, तेषु सर्वेषु सः प्रभावः अपूर्वं भावपरिवर्तनम् उपास्थापयत्। पाश्चात्त्यम् अवागमयत्, त्यागाय भोगः— एतद् वाक्यं पुरोहितजनानां स्वार्थसिद्ध्ये उद्भूतम्। परजीवनस्य आत्मनश्च अस्तित्वस्वीकारः विशालकविकल्पना, समाजस्य यस्मिन् स्तरे मानवः जन्म जग्राह, तस्मिन्नेव स्तरे सः आमरणं निबद्धः स्यात्— एतदपेक्षया अयौक्तिकः अन्यायः नियमः किं वा स्यात्? भारतम् अपि क्रमेण तदेव अवागच्छत्, त्यागं तथा संयमप्रधानपूर्वजीवनलक्ष्यं परित्यज्य अधिकतराय भोगलाभाय व्यग्रः अभवत्। तेन पूर्वेषां शिक्षादीनां लोपः अभूत्, किञ्च नास्तिक्यस्य, परानुकरणप्रियतायाः आत्मविश्वासराहितस्य च उदयपूर्वकं तं मेरुदण्डहीनं प्राणिनम् इव अत्यन्तं निर्वीर्यम् अकार्षीत्। भारतम् अवागमत्, तद् एतावत्कालं यावद् यं हृदयेन ऊढ्वा यत्नेन अनुष्ठापितवान् आसीत्, सः अत्यन्तं भ्रमात्मकः, विज्ञानबलेन बलशालि पाश्चात्त्यं तस्य संस्कारसमूहान् अमार्जितान् अर्धनिष्ठुरान् च निर्दिशति, तदेव सत्यम् अनुभूयते। भोगकाममुग्धं भारतं स्वस्य पूर्वेतिहासं पूर्वगौरवञ्च विसस्मार। स्मृतिभ्रंशात् तस्य बुद्धिनाशः उपतस्थौ, अपि च सः तस्य राष्ट्रियास्तित्वस्य विलोपसाधनाय उपचक्रमे। पुनः ऐहिकभोगलाभाय इदानीमारभ्य परमुखापेक्षी भूत्वा तस्य स्थितिकारणात् तल्लाभोऽपि तस्य भाग्यात् दूरं गतः। तादृशरूपेण योगः भोगश्च इत्येतदुभयमार्गाद् भ्रष्टः भूत्वा नेतृशून्यः पोतः इव सः परानुकरणं कृत्वा अभिलाषाभिमुखं यथेष्टं परिभ्रमन् आसीत्।

## पाश्चात्त्यभावसाहाय्येन निर्जीवं भारतं सजीवतायै चेष्टा तत्फलञ्च

तदा चतसृभ्यः दिग्भ्यः ध्वनिः उदितः, भारतवर्षस्य जातीयजीवनं कस्मिन्नपि काले नासीत्। पाश्चात्त्यकृपया एतावद्दिनाद् अनन्तरं तस्य तादृशजीवनस्य उन्मेषः भवति, परन्तु तस्य पूर्णविकाशस्य पथि इदानीमपि विद्यन्ते बहवः विघ्नाः। सः खलु तस्य अपरिहार्यः धर्मसंस्कारः, सः एव तस्य विनाशम् अकार्षीत्। सा खलु असङ्ख्येयानां देवदेवीनां पूजा– सा पौत्तलिकता एव तस्य उन्नतेः बाधा अभूत्। तस्य विनाशं कुरु, उच्छेदं कुरु, तदैव भारतभारती सजीवा भविष्यति। येशुधर्मः, तदनुकरणेन एकेश्वरवादश्च प्रचारितः अभूत्। पाश्चात्त्यानुकरणेन सभासमित्यादयः आविर्भूय प्राणरहितं भारतं राजनीतिः, समाजतत्त्वं, विधवाविवाहः, स्त्रीस्वाधीनतायाः उपकारिता इत्याद्याः नैकाः कथाः श्रावयामासुः– किन्तु तदभावबोधः, विलापश्च न निवृत्तः, अपि तु प्रतिदिनं वर्धमानः आसीत्। रेलमार्गः, टेलिग्राफ् इत्यादीनि पाश्चात्त्यसभ्यतायाः उपकरणानि एकैकशः भारतवर्षे आनीतानि। किन्तु व्यर्थचेष्टा


*dīpaśikhā*/v5/2023/Dr. Rakesh Das, Santanu Nayek/pp. 25-27

एषा– यया भावप्रेरणया भारतं सजीवम् आसीत्, तदनुसन्धानं पुनःप्रवर्तनचेष्टा च तेषु सर्वेषु किमपि नाभवत्। औषधं समुपचितस्थाने प्रयुक्तं नाभूत्, अतः रोगोपशमः केन रूपेण भवेत्? धर्मप्राणस्य भारतवर्षस्य धर्मः सजीवः न भवति चेत् भारतं कथं सजीवं स्यात्? पाश्चात्त्यस्य भावप्रसारेण तस्मिन् या धर्मग्लानिः उपस्थिता वर्तते, नस्तिकपाश्चात्त्यस्य तद्दूरीकरणे सामर्थ्यं कुत्र? पाश्चात्त्यं स्वयम् असिद्धं, तद् अपरं कथं सिद्धं करिष्यति।

## भारतवर्षस्य प्राचीनजातीयजीवनस्य दोषगुणविचारः

पाश्चात्त्याधिकारात् प्राक् भारतवर्षस्य जातीयजीवने कोऽपि दोषः नासीद् इति वक्तुं न शक्यते। किन्तु जातीयजीवनस्य सजीवत्वात् तादृशदोषनिवारणे स्वतःप्रवृत्ता चेष्टापि तस्मिन् सदा परिलक्षितासीत्। जातेः समाजस्य च अन्तः अधुना तादृश्याः चेष्टायाः विलोपं दृष्ट्वा अवगन्तव्यं यत्, पाश्चात्त्यभावप्रसाररूपस्य औषधस्य प्रयोगेण रोगेण सह रुग्णोऽपि अपसृतः भवति।

## पाश्चात्त्यभावविस्तारे भारतवर्षस्य वर्तमानकालिकी धर्मग्लानिः

अत एव दृश्यते यत्, पाश्चात्त्यस्य धर्मग्लानिः भारतवर्षेऽपि विस्तृता अभूत्। वास्तविकी सा ग्लानिः वर्तमानकाले पृथिव्याः सर्वस्मिन् प्रदेशे कियत् प्रबलम् अभूत्, तत् स्मर्यते चेत् स्तब्धाः भवेम। धर्मः इति नाम्ना यदि कश्चित् वास्तविकः पदार्थः अस्ति, किञ्च विधातुः निर्देशेन तल्लाभः यदि मानवस्य साध्यायत्तः भवति, तर्हि वर्तमानयुगस्य भोगनिष्ठं मानवजीवनं तस्मात् बहुदूरं व्यभिचरितं वर्तते इति निश्चप्रचम्। तस्माद् एव कारणात् विज्ञानम् अवलम्ब्य मानवस्य वर्तमानकालिकः जीवनस्य प्रसारः मानवं वैचित्र्यपूर्णभोगसाधनलाभे समर्थितश्चेद् अपि, तं शान्तं कर्तुं नाशकत्। कः तस्य प्रतिकारं करिष्यति? पृथिव्याः सा अशान्तिः विलापश्च कस्य प्राणेषु अनवरतं ध्वनन् तं सर्वभोगसाधने उपेक्षापूर्वकं युगोपयोगिनवीनधर्ममार्गाविष्कारे प्रयोजयिष्यति? प्राच्यस्य पाश्चात्त्यस्य च धर्मग्लानिं दूरीकृत्य शान्तिपूर्णे नवे मार्गे जीवनं परिचालयितुं मानवाय पुनः कः शिक्षयिष्यति।

## तस्याः ग्लानेः निवारणाय ईश्वरस्य पुनः अवतरणम्

गीतायां श्रीभगवान् प्रत्यजानीत, जगति धर्मग्लानिः उपस्थिता भवति चेदेव सः स्वीयायाः मायाशक्त्याः अवलम्बनपूर्वकं सशरीरम् आविर्भविष्यति, तां ग्लानिं दूरीकृत्य पुनः मानवं शान्तं करिष्यति। वर्तमानकालिकं युगप्रयोजनं करुणया विषमोत्तेजनायाः आनयनं न करिष्यति? वर्तमानकालिकः अभावबोधः अशान्तिश्च किं तं शरीरपरिग्रहणे न प्रयोजयिष्यति?

हे पाठकाः! युगप्रयोजनं तत्कार्यं समपादयत्– श्रीभगवान् जगद्गुरुरूपेण सत्यमेव पुनः आविर्बभूव। आश्वसितहृदयेन श्रवणं कुरु, तस्य पूतम् आशीर्वचनं– “यावन्ति मतानि तावन्तः पन्थानः”, “सर्वान्तःकरणेषु यस्यैव अनुष्ठानं करिष्यसि, तस्माद् एव त्वं श्रीभगवन्तं लप्स्यसे।” मुग्धः सन् मननं कुरु– परविद्यायाः पुनरानयनाय तस्य अलौकिकत्यागतपस्ययोः तस्य कामगन्धरहितस्य पवित्रचरित्रस्य च यथासाध्यम् आलोचनं ध्यानं च कृत्वागच्छ, आवाम् उभौ पवित्रौ भवावः।

# स्वामिगम्भीरानन्देन विरचितं स्वामिब्रह्मानन्दचरितम्

## ब्रह्मचारिणा मनोमयेन अनूदितम्

'राखालः' इति श्रवणेन भावाविष्टः ठाकुरः गदगदस्वरेण उदचारयत्— 'तन्नाम, राखालः- व्रजस्य राखालः'। अपरं किञ्चित् प्रकृतिस्थः भूत्वा सादरेण अवदत् 'पुनः आगच्छतात्'।

इतः प्रथमदर्शनेन एव राखालस्य अन्तःकरणे विद्युत्प्रकाशः इव कश्चन उच्छ्वासः प्रावहत्— तस्य देहमनःप्राणाः सर्वे एककालम् इमं परमपुरुषं प्रति निविडावेशेन आकृष्टाः अभवन्। सः मनसा चिन्तयामास— "एषः कः? एषः सौम्यः महापुरुषः कः? अस्य अनिमेषदृष्टौ यत् दैवं माधुर्यं प्रवहति, तद् इहलौकिकं न, अस्य नयनसमीपे निश्चयेनैव तत् नित्यसत्यवस्तु सदा विद्यमानं वर्तते।" **मार्गेण गच्छतः राखालस्य कर्णाभ्यां सा कोमला वाणी ध्वनिता भवति स्म, "पुनः आगच्छतात्।"**

प्रेमघनमूर्तेः श्रीरामकृष्णस्य अपूर्वाकर्षणेन राखालः पुनः दक्षिणेश्वरं गन्तुं अवकाशम् अन्विषति स्म, किञ्च विद्यालयावसानात् परम् एकस्मिन् दिने एकाकी तत्र उपस्थितोऽभूत्। श्रीरामकृष्णं दृष्ट्वैव मनसि भातं यथा तस्यागमनार्थमेव सः प्रतीक्षमाणः इव— राखालस्य आगमनेन एव सानुयोगेन अगदत्— 'तव अत्रागमनार्थम् एतावान् विलम्बः कुतः?' इति। राखालः किं वा वदेत्? उभौ तदा उभयम् अनिमिलितचक्षुर्भ्यां पश्यन्तौ एकस्याम् अलौकिकीभावभूमौ उपस्थितौ लीलाविलासे मग्नौ आस्ताम्— वाचा तदा उत्तरं कः प्रयच्छेत्? मातृहीनः राखालः भावघनतनुं श्रीरामकृष्णं स्वजननीरूपेण प्राप्नोत्, किञ्च यद्यपि राखालः युवकः आसीत् तथापि श्रीरामकृष्णः तं शिशुत्वेन परिगणितवान्। ततः परं राखालः प्रायः दक्षिणेश्वरम् आगच्छति स्म, मध्ये मध्ये तत्र निवसति स्म च। अस्मिन् काले या अपूर्वलीला संघटिता तद् वर्णयन् श्रीरामकृष्णः अवदत्— 'तदा राखालस्य भावः त्रिचतुरवर्षीयः बालकः इव आसीत्। मातरम् इव माम् अङ्गीकृतवान्। मध्ये मध्ये हठात् धावन् आगत्य मत्क्रोडे उपविश्य सानन्देन निःसङ्कोचं स्तन्यपानं करोति स्म। गृहस्य का कथा— इतः क्वापि सः न गन्तुम् इच्छति। मां लब्ध्वा आत्मानं विस्मरतः राखालस्य अन्तः कथं बालकभावस्य आवेशः भवति स्म तद्वाचा वर्णयितुं न शक्यते। तदा यः कोऽपि तम् एवम् अपश्यत् सः एव व्यस्मयत। अहमपि भावाविष्टः सन् तं क्षीरनवनीतादिकम् अखादयम्। क्रीडनकादिकं च प्रादाम्। बहुवारं स्कन्धे उपावेशयम्। तदा तस्य सङ्कोचस्य लेशः अपि नाभवत्।'

एकस्मिन् दिवसे राखालस्य विषये ठाकुरः उक्तवान्, 'राखालस्य साकारभावः नरेन्द्रस्य निराकारभावः।' यदा राखालः प्रथमं दक्षिणेश्वरम् आगतवान्, तदा नरेन्द्रनाथेन सह ब्राह्मसमाजं गच्छति स्म सः, किञ्च तस्य प्रेरणया समाजस्य प्रतिज्ञापत्रे स्वाक्षरम् अपि कृतवान्। तदनुसारेण मूर्तिपूजनं, किंवा देवीदेवेभ्यः प्रणामनिवेदनं च तस्य वर्जितम् आसीत्। श्रीरामकृष्णस्य संस्पर्शेन सः तत् सर्वं शिक्षितवान्, किञ्च तदेव तस्य स्वभावानुरूपम् अभवत् इति कृत्वा तत्रैव आनन्दम् अन्वभवत्। राखालस्य दक्षिणेश्वरागमनात् केभ्यश्चित् मासेभ्यः परमेव नरेन्द्रः दक्षिणेश्वरम् आगच्छत्, पुनः स्वल्पदिनाभ्यन्तरे एव राखालस्य परिवर्तनं परिलक्ष्य ठाकुरस्य अप्रत्यक्षं तं कपटचारिणम् उक्त्वा कर्कशभाषया अभर्त्सयत्। कोमलप्रकृतिः राखालः नरेन्द्रनाथम् अनुसरति स्म, किञ्च तेन सह वादं न कुरुते स्म। सुतराम् अस्याः घटनायाः परं सः नरेन्द्रनाथस्य समीपं नागच्छत्। ठाकुरः इदं परिलक्ष्य अनुसन्धानं कृत्वा कारणमपि ज्ञातवान्। तदा नरेन्द्रनाथम् उक्तवान्, 'भोः, राखालं पुनः किमपि न वद,

सः त्वत् बिभेति। तस्येदानीं साकारे विश्वासोऽभवत्— किं वा स कुर्यात् सम्प्रति कथय? सर्वे किं प्रथमतः निराकारसाधनां कर्तुं शक्नुवन्ति?' अस्मिन् समये एकद्युः वैष्णवमहाजनानां पदावलीकीर्तनं शृण्वन् ठाकुरः शरीरस्य आवरणम् अच्छिनत्, पुनः तस्य अश्रु-पुलक-कम्पनादि प्रकटितम् अभवत्। महता भावेन सः अवदत्, 'प्राणनाथं हृदयवल्लभं कृष्णं कृपया अत्र आनयत यूयं, सुहृदः कर्म एतत्। तम् आनयत नो चेत् मां तत्र नय—युष्माकं चिरदासी भविष्यामि।' राखालः अपलकदृष्ट्या तं भावं दृष्टवान्। साग्रहमनसा तस्याः आर्तेः अनुधावनं कृतवान्—ज्ञातवान् यत्, साकारोपासनं स्वीकृत्य नरेन्द्रः यत्किमपि वदतु नाम, साकारस्य श्रीकृष्णस्य प्रेमसम्भूतस्य अस्य सात्त्विकविकारस्य भित्तिरूपं यत् सत्यं वर्तते, तत् युक्तितर्कातीतम्।



[बेलुडमठे ब्रह्मानन्दस्वामिविग्रहस्य श्रीकृष्णविग्रहस्य च चित्रम्]

# ब्रह्मानन्दस्वामिना सङ्कलितः श्रीश्रीरामकृष्णोपदेशः

## ब्रह्मचारिणा शुभदीपेन अनूदितः

### विषयः - ईश्वरः

१. ईश्वरः सर्वेषाम् अन्तः कथं विराजते जानासि किम्? यथा अन्तःपुरे धनिकानां कन्याः तिष्ठन्ति, ताः सर्वान् द्रष्टुं पारयन्ति, परन्तु कोऽपि ताः अवलोकयितुं न शक्नोति। भगवान् तथा विराजते।

२. दीपस्य स्वभावः प्रकाशदानं, परन्तु केऽपि तेन (प्रकाशेन) ओदनं पचन्ति, केऽपि वा छलं कुर्वन्ति, अन्ते केचन भागवत्पाठं कुर्वन्ति, किं तेन प्रकाशः दुष्यते? अर्थात् केचन् भगवन्नामगुणकीर्तनेन मुक्तिं वाञ्छन्ति, केचित् वा चौर्यार्थं चेष्टन्ते, तेन किं भगवान् दुष्यते?

३. (तस्य निकटे) यस्य यादृशः भावः तस्य तादृशः लाभः। भगवान् कल्पतरुः, तस्य निकटे यः यत् वाञ्छति, सः तदेव प्राप्नोति। दरिद्रस्य कस्यचित् पुत्रः पाठं समाप्य मुख्यन्यायपीठे विचारकः भूत्वा चिन्तयति 'अहं सम्यगेव अस्मि', तदा भगवानपि वदति, 'त्वं सम्यक् तिष्ठ।' ततः वृत्तं समाप्य तदा गृहे अवसरकालं यापयति, तदा सः अवगच्छति, 'अस्मिन् जन्मनि किं कृतं मया?', तदा भगवानपि कथयति 'सत्यं, किं कृतं त्वया' इति।

४. ब्रह्म-शक्त्योः अभेदः। ब्रह्म यदा निष्क्रियावस्थायां तिष्ठति, तदा शुद्धब्रह्म इति अभिधीयते। एवञ्च यदा सृष्टि-स्थिति-प्रलयं करोति, तदा तच्छक्तेः कार्यम् इत्युच्यते।

५. एकदा ईश्वरीयप्रसङ्गावसरे मथुरमहोदयः ठाकुरं (श्रीरामकृष्णम्) अवदत्, 'भगवता अपि जगतः नियमः पालनीयः, सः इच्छति चेदपि सर्वं कर्तुं न शक्नोति।' ठाकुरेण उक्तं यत् 'एवं कथं स्यात्! ईश्वरः इच्छामयः, तेन इष्यते चेत् सर्वं कर्तुं पार्य्यते'। तदा मथुरमहोदयः अकथयत्, 'ईश्वरः इच्छति चेत् रक्तजपापुष्पस्य वृक्षे किं श्वेतपुष्पं कर्तुं शक्नोति?', ठाकुरेण प्रत्युत्तरितम् 'अवश्यमेव शक्नोति। तस्य इच्छा जाता चेद् अस्मिन् रक्तजपापुष्पवृक्षे श्वेतपुष्पं भवेत्'। परन्तु मथुरमहोदयेन अस्मिन् वाक्ये तदा विश्वासः न कृतः। वास्तविकतया केषाञ्चित् दिवसात् परं, दक्षिणेश्वरे पुष्पोद्याने रक्तपुष्पवृक्षे एकस्याम् एव शाखायाम् एकत्र रक्तपुष्पम् अन्यत्र च श्वेतपुष्पं प्रास्फुटत्। ठाकुरः समूलं शाखाम् उत्पाट्य मथुरमहोदयाय अदर्शयत्। मथुरमहोदयः अपि दृष्ट्वा चकितः, उक्तञ्च, 'तात, इतः परं तेन सह वादः न क्रियते।'

६. साकारनिराकारौ कीदृशौ जानीथ? यथा जलं हिमश्च। यदा जलं घनीभूतं तिष्ठति, तदा साकारम्, एवञ्च तरलं भवति चेत् निराकारम्।

७. भीष्मदेवः शरीरपातसमये शरशय्यायां शयानः आसीत्, तदा तस्य चक्षुषोः अश्रु गलितम्। अर्जुनः तद्दृष्ट्वा श्रीकृष्णम् अवदत्, 'भ्रातः, किम् आश्चर्यम्! पितामहः, यः सत्यवादी, जितेन्द्रियः, ज्ञानी, अपि च अष्टवसूनाम् एकः, सोऽपि प्रयाणसमये मायया क्रन्दति।' श्रीकृष्णेन भीष्मदेवे एवं ज्ञापिते, तेन उक्तम् 'हे कृष्ण, त्वं सम्यक् जानासि, मया तस्मात् न क्रन्द्यते। एवं खिद्यते यत्, भगवतः लीलायाः लेशम् अपि बोद्धुं न अशकं, येन मधुसूदननामजपेन जनाः आपदः तरन्ति, सः एव मधुसूदनः स्वयं पाण्डवानां सारथिः सखा चेदपि, तेषाम् आपदाम् अन्तः नास्ति'।

८. मथुरमहोदयेन साकं काशीधाम्नः दर्शनकाले परमहंसदेवः (श्रीरामकृष्णः) एकस्मिन् दिवसे

तैलङ्गस्वामिनां दर्शनाय गतवान्। ठाकुरः स्वामिनं पृष्टवान् 'ईश्वर एकः ननु, परन्तु जनाः कथं बहुं कथयन्ति?' तैलङ्गस्वामिना मौनेन स्थितम्। तेन एकया अङ्गुल्या उपरि निर्दिश्य ध्यानस्थेन इव स्थितम्। इङ्गितेन बोधितं 'तं ध्यात्वा साक्षात्क्रियते चेत् बोद्धुं शक्नोति यत् सः एकः एव, एवञ्च विचारे क्रियमाणे नानात्वबुद्धिः आपतति'।

९. यः एव साकारः, सः एव निराकारः। भक्तस्य समीपे स साकारः सन् दर्शनं प्रयच्छति। यथा महासमुद्रः, केवलम् अनन्तजलराशिः, कुलं किमपि न दृश्यते, क्वचिद् अधिक-शैत्येन जलं घनीभूय हिमरूपं जातम् इति दृश्यते। तथा भक्तस्य भक्तिहिमेन साकाररूपदर्शनं भवति। एवञ्च सूर्ये उदिते यथा हिमखण्डः तरलायते, अपि च पूर्ववत् जलेन परिणमते, तथा ज्ञानसूर्योदये सति साकारः हिमखण्डः जलरूपेण परिणमते। एवं सर्वं निराकाररूपेण विवर्तते।



[चित्रम् अन्तर्जालात् स्वीकृतम्]